॥ श्रीः ॥

शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां

# नित्यकर्मप्रयोगमाला ।

श्री–बीकानेरराज्यान्तर्गत–श्रीरत्नगढनगरनिवासिना गौडवंशाव-
तंसनानानिबन्धकर्त्रा कर्मकाण्डाचार्य-कर्मकांडकोविद-श्रौतभूषण-
इत्युपाधित्रयभूषितेन पण्डित–चतुर्थीलालशर्मणा प्रणीता
"नोहर बीकानेर" ब्राह्मणपाठशालायां प्रधानाध्यापकेन
विद्यावारिधि-शाब्दिकचूडामणि पं० श्रीशिवनारा-
यणशास्त्रिणा विरचितया सारदर्शिनीसमाख्यया
विपुलटिप्पण्या विभूषिता च ।


मुद्रक एवं प्रकाशक:

खेमराज श्रीकृष्णदास™,

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.

संस्करण : नवंबर २०१९, संवत् २०७६

मूल्य : २०० रुपये मात्र ।

मुद्रक एवं प्रकाशक:
खेमराज श्रीकृष्णदास,™
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
मुंबई - ४०० ००४.



Printers & Publishers :
Khemraj Shrikrishnadass,
Prop: Shri Venkateshwar Press,
Khemraj Shrikrishnadass Marg, 7th Khetwadi,
Mumbai - 400 004.

Web Site : http://www.Khe-shri.com
Email : khemraj@vsnl.com

Printed by Sanjay Bajaj For M/s. Khemraj Shrikrishnadass Proprietors Shri Venkateshwar Press, Mumbai - 400 004, at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune 411 013.

# प्रस्तावना ।

अयि श्रौतस्मार्तकर्मानुष्ठानप्रसक्तमानस-सच्चारित्रपवित्रताखिलदिङ्मण्डलमहोदया विद्वांसः ! नैतदविदितं तत्रभवतां भवताम्, यत्किल करुणाकूपारेण भगवता परमेश्वरेण पुरुषार्थचतुष्टयसाधनोपयोगिकर्मानुष्ठानोद्बोधका वेदाः प्रजाश्रेयसे प्रादुर्भावयामासिर इति । तत्र भारतीयाः केचन कर्मानुष्ठानपद्धतिं जानन्त्येव न, केचन ज्ञात्वापि नानुतिष्ठन्ति, परमनुष्ठानाभावाज्ज्ञानं न सप्रयोजनम् । यथा-"अन्तर्गतं तमश्छेत्तुं शास्त्राद्बोधो हि न क्षमः । यथा न नश्यति तमः कृतया दीपवार्त्तया ॥" इति । केचन नित्यादिकर्मानुष्ठानबद्धादरा अपि तत्कर्मपद्धतिनिबन्धमन्तरा क्लिश्यन्ति । तत्र यद्यपि मैथिलदाक्षिणात्यनिर्मिताः केचन ग्रन्थाः समुपलभ्यन्ते परन्तु गौडनिबन्धग्रन्थानां यवनराज्यकालतो लुप्तप्रायत्वात्तेषां तु तदभाव एव । अथ च येषु सर्वविषयज्ञातारो महान्तो विद्वांसो बहवः सन्ति तेषामन्यदीयनिबन्धतः कर्मकरणं किं न हास्यास्पदम् ? इति मनसि निधाय मया चतुर्थीलालभास्करनामा द्वादशनिबन्धात्मको महानिबन्धो निबद्धः, तत्र चाष्टौ मुद्रिताः सन्ति ।

अयं च यथार्थनामा नित्यकर्मप्रयोगमालानामकग्रन्थो निर्माय मया मुम्बयीस्थ "श्रीवेंकटेश्वर" यन्त्रालयाध्यक्षाय क्षेमराज-श्रीकृष्णदासश्रेष्ठिने समर्पितः । तेन च शोभनशीसकाक्षरैः पुष्टमसृणपत्रेषु संमुद्रय प्रकाश्यते तदेतद्ग्रहणकर्मानुष्ठानादिनाऽनुगृह्णन्तु महात्मान इति भृशमभ्यर्थयते-

पण्डित-चतुर्थीलालशर्म्मा ।

कर्मकाण्डकोविदो, रतनगढस्थः ।

# ❋ उपाधिपत्रमिदम् ❋

श्रीयुत कलिकातायां रतनगढ–नगर–निवासिन् पं० चतुर्थीलालशर्मन्
अस्ति तावत् भरतखण्डेऽस्मिन् निखिलभुवन–निर्माण–संरक्षण–विनाशादिलीलस्य सकलजगत्कल्याणैकनिक्षनस्य भगवतः कमलापतेः पुरुषोत्तमस्य परमदयालोः श्रीमन्नारायणस्य आज्ञाशक्तिरूपं सकल–श्रीवैष्णवश्रेयोनिदानं श्रीवैष्णवमहासम्मेलनं नाम समुदायशक्तिविकासस्थानं किमपि स्थानम् । तदिदं विद्यागुण–धर्माभिमानादिशालिभ्यस्तेषां प्रोत्साहनाय तदीययोग्यतानुसारेण नानाविधोपाधि–वितरणं कुर्वदात्मनो गुणग्राहितां तदा तदा प्रकाशयाति तदिदमद्य भवदीयं प्रयोगशास्त्रसामर्थ्यमालोच्य भवन्तं "कर्मकाण्डकोविद" इति उपाधिदानेन सम्मानयदात्मनः कर्त्तव्यनिष्ठताया अभिमानं प्रकाशयति । आशास्ते च भवानेवमेवोत्तरोत्तरं कर्त्तव्यपालनं कुर्वन् भगवतः कृपया चिरायुर्भवान्विति–

प्रतिवादिभयंकरः श्रीअनन्ताचार्यः

| | |
|---|---|
| वैशाखशुक्ल ५<br>संवत् १९७२<br>विक्रम० | सभापतिः–<br>श्रीवैष्णवसम्मेलनस्य ।<br>कलकत्ता, |

उपाधिपत्रमिदम्—श्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम्।

श्रीमत्परमहंस—परिव्राजकाचार्य्यपदवाक्यप्रमाणपारीण—यमाद्यष्टाङ्गयोगानुष्ठ-ननिष्ठतपश्चर्याचरण—चक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषण्मतस्थापनाचार्य-सांख्य-मयप्रतिपादक—वैदिकमार्गप्रवर्त्तक—सर्वतंत्रस्वतंत्र—निखिलनिगमागमसारहृदय—श्रीम-त्सुधन्वसाम्राज्यप्रतिष्ठापनाचार्य—व्याख्यानसिंहासनाधीश्वर—राजाधिराजगुरुभूमण्ड-लाचार्य—चातुर्वर्ण्यशिक्षक - रत्नाकरतीरवासप्रभासपत्तनाधीश्वर—पश्चिमाम्नायश्रीशार-दापीठाधीश्वर—श्रीमच्छंकराचार्य—श्रीमाधवतीर्थस्वामिचरणकमलभृंगायमाण-श्रीत्रि-विक्रमतीर्थस्वामिचरणै—रत्यंतशिष्यकोटिप्रविष्टं रतनगढनिवासिनं पण्डितचतुर्थीला-लशर्माणं प्रति प्रत्यग्ब्रह्मैक्यानुसंधानसमनियतनारायणस्मरणसंसूचिताऽऽशिषः समुल्लसन्तुराम्। जगद्गुरूणां महेश्वरापरावतार—श्रीमच्छंकरभगवत्पूज्यपादाचार्याणां प्रधानस्थानश्रीप्रभासपत्तनस्थ—श्रीशारदापीठगोचराभक्तिरनवाधिकश्रेयोनिदानमिति सार्वजनीनमेतत्। अनेकनिबंधनिर्मातारं स्वधर्मनिष्ठं प्रजाभ्युदयार्थं प्रयतमानं भवन्तं "कर्मकाण्डभास्कर" इत्युपाधिभूषितं कुर्मः।आश्विन कृष्ण। ३०सोमे १९७७विक्रमाब्दे

॥ श्रीः ॥

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः॥

# विद्यामानपत्रम् ।

## श्रीयुक्त पं॰ चतुर्थीलालजी महाशय रतनगढ बीकानेर ।

ज्ञानस्य जननी विद्या । अविद्यारूपं तमो यथा निरस्यते सा विद्या । पारमार्थिकं च तस्या विद्यायाः स्वरूपं संस्कृतां देवगिरं द्वारीकृत्यैव जगति प्राकाश्यत । साम्प्रतमधःपतितायामार्य्यजातौ सद्विद्यां पुनः प्रचार्य्याऽज्ञानोद्यमराहित्यादिदोषजातं च दूरीकृत्य यावदस्यां धर्म्मशक्तिर्न पुनराविर्भाव्यते तावदस्या जीवनरक्षकर्त्तुं न शक्यते।आदिशिक्षितायामादिमननशीलायामादिविज्ञानविदि जगद्गुरुत्वेनाऽभिमतायामार्य्यजातौ सद्विद्यायाः पुनर्विकाशार्थं सनातनधर्म्मस्य पुनरभ्युदयसाधनपुरस्सरं जगत्कल्याणकारिण्या धर्म्मशक्तेराविर्भावार्थं च सकलधर्मसमालयानां समष्टिरूपायाः श्रीभारतधर्म्ममहामण्डलाख्याया विराट्धर्म्मसभायाः स्थापनमभूत् ।

यत्र ये केचित् श्रीसरस्वतीदेव्याः कृपास्पदीभूता विद्वांसो विद्योन्नतौ रतास्ते सर्व्वेऽप्यस्याः स्वजातीयविराट्धर्म्मसभायाः प्रेमभाजनानीति भवतः कर्मकाण्डयोग्यतया प्रसन्नेयं स्वजातीयधर्म्ममहासभा सद्विद्यायाः सम्मानवृद्ध्यर्थ—भवंतं "श्रौतभूषण" विद्योपाधिरूपालङ्कारेणालंकृत्य परमं प्रमोदमश्नुते । सर्व्वज्ञानमयस्य सर्वशक्तिमतः परमेश्वरस्य चरणकमलयोः सविनयं प्रार्थयते च भवत आध्यात्मिक्युन्नतिर्भूयादिति शम् ।

| | |
|---|---|
| श्रीकाशीधाम्नि<br>श्रीभारतधर्म्ममहामण्डलप्रधानकार्यालयः तिथौ ११ पक्षे कृष्णे मासे पौषे वर्षे१९७५ रामचंद्र नायक कालिया.<br>प्रधानाध्यक्षः | श्रीरमेश्वरसिंहः<br>मिथिलाधिपतिः जी॰सी॰ आई॰ ई॰के॰ वी॰ ई॰<br>सभापतिः<br>श्रीभारतधर्म्ममहामण्डलस्य। |

# आशीर्वादपत्रम् ।

**श्रीभारतधर्म्ममहामण्डल,**

बनारस छावनी ।

ता० २० अप्रेल, १९१९.

## पण्डित चतुर्थीलालजी श्रौतभूषण

रतनगढ बीकानेर ।

श्रीमानजी,

मुझे श्रीमहामण्डलकी सभाने आज्ञा दी है कि दिसम्बर १९१८ को दिल्लीके वार्षिक "अधिवेशन" पर सर्व भारतवर्षी धर्मसभाकी ओरसे कर्म्मकाण्डमें योग्यता प्राप्ति करनेपर आपको जो मानपत्र मिला था सो भेजता हूँ, इस मानपत्रके साथ आपको संस्थाके मुख्य पण्डितों और साधुओंकी शुभचिन्तनापूर्वक आर्शीवाद पहुँचाता हूँ कृपा करके मानपत्रकी पहुँचको स्वीकार करके अनुगृहीत कीजियेगा ॥

भवदीय—

सभापतिः—

महाराज बहादुर दरभङ्गा
महाराज बहादुर, आफ.
जम्बूवा काश्मीर.
महाराज बहादुर गीधोर.

एम० गौतम
सहायक मन्त्री
जनरल सेक्रेटरी,
पण्डित रामचन्द्र नायक,
कालिया ।

# ग्रंथकर्तृणां संक्षिप्तसंजीवनीपत्रम् ।

अस्ति किल विद्वज्जनमानिते पावने भारते देशे भगवतस्तीर्थस्वामिनः श्रीपुष्कर-राजस्योत्तरस्यां दिशि कश्चिन्मरुस्थलो भागः । यत्र राजते विविधराज्यसमावेशोपनीता धर्म्मोपवीता श्रीबीकानेरराजधानी । तद्भूतमेवैकं द्विजवर्य्यैरुपास्यमानं रत्नगढनामकं मनोहरं प्रसिद्धं नगरम् ।

तत्रैव ग्रन्थकर्तृणां वसतिम्पूर्वपूरुषाः ।
चक्रुर्धर्मेण जीवंतः सुधियाश्चिरकालतः ॥ १ ॥
प्रतिष्ठितो मान्यगणेषु गण्यो बभूव तद्वंशजजीवराजः ।
तदात्मनः पञ्चसुतास्त्वभूवन्रत्नानि सिन्धोरिव मथ्यमानात् ॥ २ ॥
श्रीरामकृष्णोऽमरचन्द्रनामा तथा चनीरामगुमानिरामौ ।
श्रीलालचन्द्राभिध एत एव प्राधान्यमत्रापत रामकृष्णः ॥ ३ ॥

अन्येषाञ्चतुर्णामपि बाहुल्येन शाखिनां शाखाप्रवरोहवद्वंशविस्तरः सञ्जातः विस्तृतिभयाद्वक्तुं न शक्यः ।

विद्वच्छ्रीरामकृष्णो हि पुत्रत्रयमजीजनत् ।
चतुर्भुजन्तु कस्तूरीचन्द्रं ज्येष्ठमलम्परम् ॥ ४ ॥

बलवतो भगवतः कालस्य वैपरीत्यादल्पायुष्येव श्रीमान् चतुर्भुजस्तु पञ्चत्वं लेभे । अपि चाद्यापि तद्वृद्धा गृहिणी सुखेनोपतिष्ठते । अपरः श्रीकस्तूरीचन्द्रस्तु स्वकीयपितृव्याऽमरचन्द्रेण पुत्रीकृतस्तस्थौ । तृतीयः श्रीज्येष्ठमलो भक्तिदानसदाचारसम्पन्नो विद्वत्सु नाम निर्वापयन् प्रियजनं विहाय स्वर्लोकञ्जगाम । यतो विकीर्यमाणं पुत्रपौत्रप्रभृतिसंकुलं वंशं बहूनां वरीवर्ति । न शक्यते तत् पत्रीकर्तुम् ।

## भगवान्कस्तूरिचन्द्रस्तु—

आस्थापयन्नात्मनि शान्तवृत्तिं रेमे सदा पण्डितमण्डलीषु ।
शास्त्रीयभावेषु कृतप्रवृत्तिर्मेने प्रधानं किल कर्मकाण्डम् ॥ ५ ॥

जगन्नाथकाशीगयायातयात्रः सदा तीव्रतेजा यतः पुण्यपात्रम् ।
तथाऽशेषसत्कर्म्मभिः पूतगात्रः सुखं लब्धवान्प्रार्थितब्रह्ममात्रः ॥६॥

स तु १९६१ हायनस्य कार्तिकशुक्लषष्ठ्यां परलोकवर्त्माश्रितवान् ।

उदितौ द्वौ सुतौ तस्य नानासच्छास्त्रकोविदौ ।
अंशुमालिद्वयमिव तत्तेज उदयाचलात् ॥ ७ ॥

तत्र प्राथमिकः श्रीचतुर्थीलालः सं० १९२४ आश्विनकृष्णचतुर्थ्यां भौमवासरे मेषलग्ने जन्मावसरम्प्राप तस्य दक्षिणहस्तपादयोरूर्द्ध्वरेखा मत्स्यरेखा तिलचिह्नं चास्ति अपरः श्रीगुरुमुखरायस्तु सं० १९२७ कार्तिकशुक्लनवम्यां जन्म लभमानो व्याकरणज्योतिष–साहित्य–काव्यालंकारेषु चाद्भुत्यन्निदर्शयन् विधिवशात् कृत-श्रीवदरीनारायणयात्रः संग्रहणीरोगमिषेण सं० १९५८ मार्गशीर्षशुक्लसप्तम्यां त्यक्तस्त्रीमात्रः परलोकमसेवत ।

श्रीचतुर्थीलालस्तु–प्रारंभतो जातकुशाग्रबुद्धिर्विवेद नूत्नं विषयं सदाशु ।
ग्रामान्तरे नाधिजगे कदापि स्थाने स्वकीये हि गृहीतविद्यः ॥ ८ ॥

बाल्यादेव विचित्रलेखलिखनेऽभ्यासोऽस्य पूर्त्तिङ्गतः
श्लोकानान्तु शतत्रयं लिखितवान् सम्यक्तया प्रत्यहम् ॥
आचार्याज्जयदेवतोऽलभत वै यज्ञोपवीतं शुभं
ह्यायुर्द्वादशवार्षिकञ्च गमयन्नृष्याग्निके ३७ संवति ॥ ९ ॥

श्रीपण्डितश्रीधरोपदेशादधीतसंध्योपासनादि नित्यकर्माभवत् । अथ त्रयोदशे वर्षे चैत्रशुक्लपंचम्यां पाणिग्रहणसंस्कारेण संस्कृतः सन् श्रीपं० वासुदेवतः फत्तेपुर-निवासिनिजमातुलीभूतनिर्मलोपाधि श्रीपं० हरनंदरायतश्च कर्मकाण्डं वैद्यकविषयं श्रीमद्भागवतं चापाठीत् । पं० श्रीभूधरमलसाहाय्येन व्याकरण–पुराण–वेदांतेषु शास्त्रेष्वन्येषु चाभ्यसितोऽभूत् । पं० श्रीगौरीशंकर–कृपयाऽऽयुर्वेदपयोनिधिं पारङ्-गतवान् पं० श्रीरामप्रतापमिश्रं ज्योतिःशास्त्रे गुरुं मनुते--

अधुना तु—धृतशास्त्रमतिः स्थितधर्मगतिः कृतशान्तिरतिस्तृतदानततिः ।
तुलसीदलबिल्वदलैः सततं प्रतिपूजति देवगणान् निरतः ॥ १० ॥

अथ १९४७ संवति मृतप्राक्तनभार्य्येणाऽपरोपि विवाहः समकारि—सं० १९५० ज्येष्ठशुक्लद्वादश्याम् । पं० श्रीनानूरामशास्त्रिणामुपदेशेन खेमकोपाधिना श्रेष्ठिश्रीस्नेहिरामगुप्तेन निर्मितायां धर्मसभायामाविंशतिवर्षं श्रोतृगणानष्टादशमहापुराणानि श्रीमहाभारतं वाल्मीकिरामायणं धर्मशास्त्राणि च श्रावयामास ।

ततस्तु—मंत्रैः कर्माणि शूद्राणां कारयन्ति च पण्डिताः ।
मत्वेदं रचयामास तदर्थम्बहुपद्धतीः ॥ ११ ॥

शूद्रवास्तुपद्धतिःशूद्रश्राद्धपद्धतिःशूद्रविवाहपद्धतिश्चापूर्वतां दर्शयाम्बभूवुः। लुप्यन्ते गौडग्रन्थाः प्रचरन्ति दाक्षिणात्यमैथिला इति मन्यमानो वाराणसीप्रभृतिप्रधानशारदास्थानेष्वपि च तदभावं विज्ञाय द्वादशमहानिबन्धान् बबंध ह । ते च प्रतिष्ठाप्रकाश १ जलाशयोत्सर्गप्रकाश २ गौडीयश्राद्धप्रकाश ३ शान्तिप्रकाश ४ मुहूर्तप्रकाश ५ अनुष्ठानप्रकाश ६ संस्कारप्रकाश ७ व्रतोद्यापनप्रकाश ८ प्रायश्चित्तप्रकाश ९ दानप्रकाश १० शुद्धिप्रकाश ११ चिकित्साप्रकाश १२ इति संज्ञां लभंते, नित्यकर्मप्रयोगमालापि श्रीमतैव सम्पादिता । एत उक्तग्रंथा मुम्बईनिवासि—श्रेष्ठिक्षेमराजेन स्वकीये श्रीवेङ्कटेश्वर—मुद्रणालये मुद्रापिताः ।

अथ कृतवारचतुष्टयजगन्नाथदर्शनो गंगा—यमुना—सरस्वती—प्रयाग—काशी—गया—मथुरा-वृंदावन-श्रीरामेश्वर-श्रीरंग-चिदंबर-कांची-वेंकटाचल गोदावरी-त्र्यंबकेश्वर-ओंकार-उज्जैन-महाकालेश्वर-डाकोर-सिद्धपुर-गिरिनार-प्रभासक्षेत्र—सोमनाथ-सुदामापुरी-श्रीद्वारिकाद्वय-नागेश्वर-वैद्यनाथ-कुरुक्षेत्र—लोहार्गल—पुष्करादिकृतयात्रश्च सर्वत्र गङ्गाजलकूपोदकं च पिबन् सदाचारयुतो विहितपारदकलेवरं कैलासवासिनं भगवंतमुपास्ते अपि न द्वेष्टि देवताभ्यः काभ्यश्चिदिति ।

अपरश्च—अस्त्येकं ग्रामरत्नं स्थितिरपि नहि तस्यातिदूरे विभाति
ह्यासीत्तस्य त्वपेयं लवणितमहितं कृत्स्नशः क्षारवारि ॥

तत्रत्योऽशेषलोको बहुतरमशुनक् प्रत्यहं स्पष्टकष्टं
सौख्यार्थं तज्जनानामथमिति प्रततन्तत्र कुण्डञ्चकार ॥ १२ ॥

बन्धोऽयमेषां परिश्रमः सहस्रशो रूप्याणाञ्च व्ययो यदालम्ब्य धूलिभिरुद्धूलिता आतपेन चातप्ताः श्रमिताः पथिकजना उज्ज्वलितं जाठरं भगवन्तं वैश्वानरं शमयन्ति । श्रीमतां सं० १९६२ भाद्रपदशुक्लत्रयोदश्यां काश्यां श्रीमहामहोपाध्याय-पं० श्रीशिवकुमारशास्त्रिभिः "कर्मकांडाचार्य" इत्युपाधिः प्राप्ता । पुनः कलिकातायां सं. १९७३ वैशाखशुक्लपूर्णिमायां वैष्णवसम्मेलनमहासभायां प्रतिवादिभयङ्करश्रीमदनन्ताचार्यैः "कर्मकाण्डकोविद" इति पदेनोपाधत्त । अनंतरं सं. १९७५ पौषकृष्णैकादश्यां श्रीभारतधर्ममहामंडलविराट्सभायां "श्रौतभूषण" इत्युपाधिदानं प्राप्तम् । पुनश्च सं. १९७७ आश्विनकृष्णाऽमावास्यायां श्रीशारदापीठाधीश्वर प्रभासपत्तनस्थ-जगद्गुरु श्रीशंकराचार्य-श्रीत्रिविक्रमतीर्थस्वामिभिः 'कर्मकाण्डभास्कर' इति पदेन संमानितः । सं. १९७६ वैशाखपूर्णिमायां भवान् महाभारतं वाल्मीकिरामायणं देवीभागवतमष्टादशपुराणानि च भूसुरेभ्योऽदात् । फाल्गुनशुक्लाष्टम्यां स्वगृहात् पश्चिमदिशि पंचमीवीथ्यां 'श्रीपतितपावनेश्वर' नामानं शिवलिङ्गं स्थापितवान् । श्रीमतो महादेवशर्माऽऽस्मभूर्विद्यालंकृतश्चोपतिष्ठते तिस्रः कन्या अपरो लघीयांश्च माणवकः पौत्रोऽप्येकः चिरञ्जीवेदिति भवतां धर्मशास्त्रविनोदेनैव कालो गच्छति चतुष्पंचाशद्वार्षिक आयुष्यधुना प्रवृत्तिर्महताम् । परमात्मैषां देशोपकाराय चिरस्थितिं कुर्यादिति मे मतिः किं बहुना विज्ञेषु । आश्विनशु० १५ सं० १९७७.

सम्पादयिता-अलीगढ "सुनामई"

निवासी-पं०श्रीखूबीरामशास्त्रीसूनु-रघुनन्दनो भिषगाचार्यः ।

॥ श्रीः ॥

# नित्यकर्मप्रयोगमालाविषयानुक्रमणिका ।

## अनुक्रमणिका ।



इति नित्यकर्मप्रयोगमालाविषयानुक्रमणिका ।

ॐ

अथ माध्यंदिनानां-

# नित्यकर्मप्रयोगमाला।

वन्दे महेश्वरं शांतं सानन्दं सुन्दरं शिवम् ॥
श्रीशं गणेशं गिरिजां तपनं पितरौ तथा ॥ १ ॥
नत्वा विश्वेश्वरं स्वेष्टं दृष्ट्वा हरिहरादिकम् ॥
चतुर्थीलालशर्माहं करोमि शिवतुष्टये ❀ ॥ २ ॥
अथोच्यते गृहस्थस्य नित्यकर्म यथाविधि ॥
यत्कृत्वाऽनृण्यमाप्नोति दैवात्पैत्र्याच्च मानुषात् ॥ ३ ॥

अथात्र ब्राह्ममुहूर्त्तमारभ्यास्वापं कर्माण्युच्यन्ते ॥ ब्राह्मो मुहूर्तः सन्ध्यापूर्वदण्डद्वयात्मकः ॥ आगमे–ब्राह्मे मुहूर्ते चोत्थाय

---

शिवदत्तान् गुरून्नत्वा शिवनारायणः सुधीः ।
कुरुते मर्मज्ञानाय टिप्पणीं सारदर्शिनीम् ॥ १ ॥

❀ ग्रन्थमिति शेषः। १ ब्राह्मो मुहूर्तो रात्रेः पश्चिमो यामः, ब्राह्मी भारती तत्प्रबोधहेतुत्वात्। मुहूर्तशब्दोऽत्र कालमात्रवचनः। २ "ब्राह्मे मुहूर्ते बुध्येत स्वस्थो रक्षार्थ–

चिंतयेद्रघुनन्दनम् ॥ श्रीपूर्वं जयमध्यस्थं द्विर्जयान्तं विचक्षणः ॥ १ ॥ अत्र स्वापे प्रायश्चित्तं रत्नावल्याम्-ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ॥ तां करोति द्विजो मोहात्पादकृच्छ्रेण शुद्धयति ॥ २ ॥

अथ प्रयोगः ॥ पूर्वोक्तब्राह्मे मुहूर्त उत्थाय । "कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती । करमूले स्थितो ब्रह्मा प्रभाते करदर्शनम् " इति स्वकरतलमवलोक्य गण्डूषत्रयं कृत्वा नेत्रे

---

-मायुषः । तत्र दुःखस्य शान्त्यर्थं स्मरेद्धि मधुसूदनम् ॥" इति भावप्रकाशे । "ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ " इति मनौ । " ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् । धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥" इति याज्ञवल्क्ये चोक्त्या सर्वैरेव प्रातरुत्थानं परमात्मस्मरणं च कार्यमिति भावः ॥ १ "श्रीराम जय राम जय जय राम' इति ॥ २ "कुचैलिनं दन्तमलोपधारिणं बह्वाशिनं निष्ठुरभाषिणं च । सूर्योदये चास्तमिते शयानं विमुञ्चति श्रीर्यदि चक्रपाणिः ॥" इत्यादि चात्रोन्नेयम् ॥ ३ विष्णुपुराणे-"स्वाचारांश्च ततः कुर्यात्पुमान् केशप्रसाधनम् । आदर्शाञ्जनमंगल्यदूर्वाद्यालभनानि च ॥ " ब्रह्माण्डपुराणे-"स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम् । " कात्यायनः-"पापिष्ठं दुर्भगं मत्तं नग्नमुत्कृत्तनासिकम् । प्रातरुत्थाय यः पश्येत् तत्कलेरुपलक्षणम् ॥ श्रोत्रियं सुभगं गां च ह्यग्निमग्निचितं तथा । प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ भल्लातकं कर्षफलं काकमार्जारमूषकान् । क्लीबं च गर्दभं चैव न पश्येत् प्रातरेव हि ॥ " यद्यकस्मान्निषिद्धेषु दृष्टिपातो भवेत्, तदा ततो दृष्टिं निवार्य स्वचक्षुषी पिदध्यादित्येष ऋषिमुनिनिर्णीतो-

प्रक्षाल्य आचम्येष्टदेवतां नमस्कृत्य प्रातःस्मरणं कुर्यात् ॥ तद्यथा—
"हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये ॥ नारायणाख्यपीयूषं पिब जिह्वे निरन्तरम् ॥ १ ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव ॥ प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥ २ ॥ भारते—अनिरुद्धं गजं ग्राहं वासुदेवं महाद्युतिम् ॥ संकर्षणं महात्मानं प्रद्युम्नं च तथैव च ॥ ३ ॥ मत्स्यं कूर्मं च वाराहं वामनं तार्क्ष्यमेव च ॥ नारसिंहं च नागेन्द्रं सृष्टिसंहारकारकम् ॥ ४ ॥ विश्वरूपं हृषीकेशं गोविन्दं मधुसूदनम् ॥ त्रिदशैर्वंदितं देवं दृढभक्तिमनूपमम् ॥५॥ एतानि प्रातरुत्थाय संस्मरिष्यंति ये नराः॥ सर्वपापैः प्रमुच्यन्ते स्वर्गलोकमवाप्नुयुः ॥ ६ ॥ " शिवादिचिन्तनम्—"प्रातः स्मरामि भवभीतिहरं सुरेशं गंगाधरं वृष-

---

—मार्ग इत्यपि बोध्यम् । अयं च मार्गः न कपोलकल्पितः, अपितु मान्यानाम् ऋषिमुनीनां सहस्रलक्षवर्षीयकठिनपरीक्षाया अनुभवस्य च फलमिदम् । यत्त किंचित्तैरलेखि, सर्वं तदक्षरशः सत्यम् । न हि स्मृतिपुराणादिसत्पथप्रदर्शकानां विदितवेदितव्यानामधिगतयाथातथ्यानां सवथा पुदोषरहितानां व्यासादिमहर्षीणां ज्ञानं कदाचिद्भ्रान्तं भवितुमर्हति । अस्माभिः स्वयं कतिचिद्वार्ताः परीक्षिताः याः सर्वथा सत्या निःसृताः, एवमन्यैरपि सति सन्देहे कतिचिद् दिनानि परीक्षा कार्या । " यत् प्रत्यक्षं तदेव प्रामाणिकम् " इत्यादिप्रलापस्तु नास्तिकानां तत्र तत्र निराकृत एव दर्शनशास्त्रेष्विति विरम्यते विस्तरभयात् ॥

भवाहनमम्बिकेशम् ॥ खट्वाङ्गशूलवरदाभयहस्तमीशं सं-
साररोगहरमौषधमद्वितीयम् ॥ १ ॥ प्रातर्नमामि गिरिशं
गिरिजार्द्धदेहं सर्गस्थितिप्रलयकारणमादिदेवम् ॥ विश्वेश्वरं
विजितविश्वमनोऽभिरामं संसाररोगहरमौषधम० ॥ २ ॥
प्रातर्भजामि शिवमेकमनन्तमाद्यं वेदान्तवेद्यमनघं पुरुषं पुरा-
णम् ॥ नामादिभेदरहितं च विकारशून्यं संसार० ॥ ३ ॥
प्रातः समुत्थाय शिवं विचिन्त्य श्लोकत्रयं येऽनुदिनं पठ-
न्ति ॥ ते दुःखजालं बहुजन्मसञ्चितं हित्वा पदं यान्ति तदैव
शम्भोः ॥ ४ ॥" "प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै
नारायणं गरुड़वाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमु-
क्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामि
मनसा वचसा च मूर्ध्ना पादारविन्दयुगुलं परमस्य पुंसः ॥
नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायण-
स्य ॥ २ ॥ प्रातर्भजामि भजतामभयङ्करं तं प्राक्सर्वजन्म-
कृतपापभयापहत्यै ॥ यो ग्राहवक्त्रपतितांघ्रिगजेन्द्रघोरशो-
कप्रणाशनकरो धृतशङ्खचक्रः ॥३॥ श्लोकत्रयमिदं पुण्यं प्रात-
रुत्थाय यः पठेत् ॥ लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥
॥ ४ ॥" "ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमि-
सुतो बुधश्च ॥ गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे

मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरंगिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः॥ रैभ्यो मरीचिश्च्यवनश्च दक्षःकुर्वन्तु स० ॥२॥ सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिंगलौ च ॥ सप्त स्वराः सप्त रसातलानि कुर्वन्तु स० ॥ ॥ ३ ॥ सप्तार्णवाः सप्तकुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ॥ भूरादि कृत्वा भुवनानि सप्त कुर्वन्तु० ॥ ४ ॥ पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलित च तेजः ॥ नभः सशब्दं महता सदैव कुर्वन्तु०स० ॥५॥" इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् ॥ दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥ ६ ॥ पुण्यश्लोकजनस्मरणमाचारमयूखे—पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ॥ पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः॥७॥अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः॥ कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ ८ ॥ सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ॥ जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ ९ ॥ अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ॥ पंचकं ना स्मरेन्नित्यं महापातकनाशनम् ॥ १० ॥ अविमुक्तचरणयुगलं दक्षिणमूर्त्तेश्च कुक्कुटचतुष्कम् ॥ स्मरणमपि वाराणस्या निहन्ति दुःस्वप्नमपशकुनम् ॥ ११ ॥

पद्मपुराणे—उमा उषा च वैदेही रमा गङ्गेति पञ्चकम् ॥ प्रात-
रेव स्मरेन्नित्यं सौभाग्यं वर्धते सदा ॥ १२ ॥ सोमनाथो
वैद्यनाथो धन्वन्तरिरथाश्विनौ ॥ पञ्चैतान्स्मरतो नित्यं व्या-
धिस्तस्य न विद्यते ॥१३॥ कपिला कालियोऽनंतो वासुकि-
स्तक्षकस्तथा ॥ पञ्चैतान्स्मरतो नित्यं विषबाधा न जायते॥
हरं हरिं हरिश्चन्द्रं हनुमन्तं हलायुधम् ॥ पञ्चकं वै स्मरेन्नित्यं
घोरसङ्कटनाशनम्॥१५॥ रामं स्कन्दं हनूमन्तं वैनतेयं वृको-
दरम् ॥ पञ्चैतान्संस्मरेन्नित्यं भवबाधा विनश्यति ॥ १६ ॥
आदित्यश्च उपेंद्रश्च चक्रपाणिर्महेश्वरः॥ दण्डपाणिः प्रतापी
स्यात्क्षुत्तृड्बाधा न जायते ॥ १७॥ वसुर्वरुणसोमौ च सर-
स्वती च सागरः ॥ पञ्चैतान्संस्मरेद्यत्र तृषा तत्र न बाधते ॥
॥ १८ ॥ सनत्कुमारदेवर्षिशुकभीष्मप्लवङ्गमाः ॥ पञ्चैता-
न्स्मरतो नित्यं कामस्तस्य न बाधते ॥ १९ ॥ रामलक्ष्मणौ
सीता च सुग्रीवो हनुमान्कपिः ॥ पञ्चैतान्स्मरतो नित्यं महा-
बाधा प्रमुच्यते ॥ २० ॥ कर्कोटकस्य नागस्य दमयन्त्या
नलस्य च ॥ ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥
॥ २१ ॥ वैन्यं पृथुं हैहयमर्जुनं च शाकुन्तलेयं भरतं नलं
च ॥ रामं च सीतां स्मरति प्रभाते तस्यार्थलाभो विजयश्च
नित्यम् ॥ २२ ॥ छन्दोगपरीशिष्टे—श्रोत्रियं सुभगां गां च

अग्निमग्निचितिं तथा ॥ प्रातरुत्थाय यः पश्येदापद्भ्यः स वमुच्यते ॥ १ ॥ इत्यादिपुराणमन्त्रान्पठित्वा ॥ समुद्रवसने देवि पर्वतस्तनमण्डले ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥१॥ इति प्रार्थ्योत्थाय रविं गुरुं तुलसीं गां च नमस्कृत्य शौचं कुर्यात् ॥ इति प्रातःस्मरणम् ॥

अथ मूत्रपुरीषोत्सर्गः ॥ तत्र क्रमः-ग्रामाद्बहिर्नैर्ऋत्यादिषु विक्षेपात्यये शुद्धमृत्तिकां ससिकतां जलपात्रं चादाय कीटादिरहितस्थलं गत्वा मृज्जलपात्रे निधाय अयज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्य प्रावृत-

---

१ "उत्तिष्ठेदगदः प्रभातसमये रक्षार्थमेवायुषो, दृष्ट्वा दर्पणरत्नबिल्वसुरभिसद्वैद्यदध्यादिकान् । स्मृत्वा किंच हरिं हरं गणपतिं देवीं रविं श्रीगुरुं नत्वा वृद्धजनांस्ततः सुखतया शौचं विदध्यात् कृती ॥" २ "प्रतिश्रयाद्दक्षिणपश्चिमेन क्षिप्रं गत्वा क्षेपमात्रं शरस्य । कुर्यात् पुरीषं तु शिरोऽवगुण्ठ्य न तु स्पृशेज्जातु शिरः करेण ॥ शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम् । अयज्ञियैरनार्द्रैश्च तृणैराच्छाद्य मेदिनीम् ॥ वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः । कुर्यान्मूत्र पुरीषं च शुचौ देशे समाहितः ॥ कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् । विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः ॥ दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ संध्ययोश्च यथा दिवा ॥ छायायामन्धकारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्यात् प्राणबाधाभयेषु च ॥ आर्द्रामलकमात्रास्तु ग्रासा इन्दुक्षये स्मृताः । तथैवाऽऽहुतयः सर्वाः शौचार्थे चैव मृत्तिकाः ॥" इत्यादिधर्मशास्त्रपुराणादीनां सारसंग्रहोऽयमिति तत्र तत्र निरीक्ष्यम् ॥

शिरा निवीती पृष्ठतः कण्ठलम्बितयज्ञोपवीत एकवस्त्रश्चेद्दक्षिणकर्ण- निहितयज्ञोपवीतो मौनी घ्राणास्ये पिधाय दिवोदङ्मुखो रात्रौ दक्षिणामुखः प्राणबाधादिषु यथासुखमुखो वा मूत्रपुरीषे उत्सृज्य लोष्टादिना गुदं परिमृज्य गृहीतशिश्नश्चोत्थाय पूर्वगृहीतमृज्जल- पात्रे गृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारं लिंगशौचं कृत्वाऽर्धप्रसृ- तितदर्धार्धमृज्जलैस्त्रिवारमपानं संशोध्य पुनर्जलैरेव लिंगगुदे प्रक्षा- ल्य शुद्धमृत्तिकया एकवारं हस्तं प्रक्षाल्य शुद्धभूमिमागत्य अन्य- मृज्जलैर्दशवारं वामकरं प्रक्षाल्य ततः करद्वयं सप्तवारं तावद्भिरेव मृज्जलैः प्रक्षाल्य वामदक्षिणपादौ प्रत्येकं त्रिः प्रक्षाल्य अन्यजलेन द्वादशगंडूषान्वामभागे कृत्वा जलपात्रं त्रिः पर्युक्ष्य उपवीती द्विरा- चामेत् ( मूत्रमात्रोत्सर्गे तु ) पूर्ववदेकवारं लिंगं प्रक्षाल्य वामकरं त्रिः प्रक्षाल्य करद्वयं द्विः प्रक्षाल्यैकैकया मृदा पादौ प्रक्षाल्य गण्डू-

---

१ "आशौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोः स्वयम्" इति देवलः ॥

२ यदा तूक्तशौचेनापि गन्धलेपक्षयो न भवति तदा "यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥" इति वच- नादधिकसंख्यापि मृद् दातव्या । अतएव "गन्धलेपक्षयकरं शौचं कुर्यादत- न्द्रितः" इति याज्ञवल्क्येनोक्तम् । यदा तूक्तसंख्याया अल्पेनापि गन्धलेपक्षयो भवति तदा "एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥" इत्यादि संख्यावाक्यारम्भसामर्थ्यात् संख्या पूरयित- व्यैव । यदाह दक्षः–"न्यूनाधिकं न कर्तव्यं शौचशुद्धिमभीप्सता । प्रायश्चित्तेन-

षचतुष्टयं विधायाचामेत् ॥ एवमेव मैथुने ज्ञेयम् ॥ शरीरस्थवेगान् न कदाचिन्निरुन्ध्यात् । कामक्रोधादींस्तु निरुन्ध्यादेवेति शास्त्ररहस्यम् । इति शौचप्रकारः ॥

अथाचमनप्रयोगः॥शुचौ देशे भूमिष्ठपादोऽन्तर्जानुहस्तः प्राङ्मुख उदङ्मुखो वा उपविश्य संहतांगुलिना माषमात्रं शुद्धं जलं गृहीत्वा मुक्तांगुष्ठकनिष्ठेन दक्षिणपाणिना अंगुष्ठमूलस्य ब्रह्मतीर्थेन केशवनारायणमाधवेति संबुद्ध्यंतैस्त्रिभिर्नामभिस्त्रिः पिबेत् ॥ ततः करौ प्रक्षाल्य अंगुष्ठमूलेन ओष्ठौ संमृज्य तं प्रक्षाल्य खानि संस्पृशेत् । तद्यथा-तर्जनीमध्यमानामिकाभिरास्यम् ॥ अंगुष्ठतर्जनीभ्यां नासारंध्रद्वयम् ॥ अनामिकांगुष्ठाभ्यां चक्षुषी ॥ ताभ्यामेव श्रोत्रे ॥ अंगुष्ठकनिष्ठिकाभ्यां नाभिम् ॥ पाणितलेन हृदयम् ॥ संकुचितकराग्रेण स्कंधद्वयम् ॥ एवमेव शीर्षम् ॥ एवं स्मार्त्ताचमनं कुर्यादित्याचमनम्[२] ॥

अथ दंतधावनम् ॥ प्रतिपत्-षष्ठी-अष्टमी—नवमी—एकादशी-चतुर्दशी—पंचदशी—संक्रांति—व्यतीपात—व्रतोपवासश्राद्धदिनार्क-

---

—युज्येत विहितातिक्रमे कृते ॥ १ "स्त्रीशूद्रयोरर्धमानं प्रोक्तं शौचं मनीषिभिः । दिवा शौचस्य निश्यर्धं पथि पादो विधीयते ॥ आर्तः कुर्याद्यथाशक्ति शक्तः कुर्याद्यथोदितम् ।" इत्यपि बोध्यम् । २ अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः । प्राग् वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ संहतांगुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्तांगुष्ठकनिष्ठे तु—

दिनातिरिक्तदिनेषु ब्राह्मणो द्वादशांगुलप्रमाणेन क्षत्रियवैश्यौ तु दशाष्टाङ्गुलमानेन स्त्रीशूद्रौ चतुरंगुलीप्रमाणेन च कनिष्ठिकाग्रवत्स्थूलेन तिंतिड्यादिविहितवृक्षोद्भवेन चूर्णीकृताग्रेण प्रक्षालितेन शुष्केणार्द्रेण वा प्राङ्मुखो मौनेन दन्तधावनं कुर्यात् । प्रतिषिद्धदिनेषु च पर्णादिना तर्जनीवर्ज्यांगुल्या अपां द्वादशगण्डूषैर्वा दंतान्संशोधयेत् । दन्तधावनमंत्राः—ॐ अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च इति ॥ ॐ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १ ॥ इति मंत्रेणाभिमंत्र्य ॥ मुखदुर्गंधनाशाय दंतानां च विशु-

---

–शेषेणाचमनं चरेत् ॥ माषमज्जेनमात्रास्तु संगृह्य त्रिः पिबेदपः । आयतं पूर्वतः कृत्वा गोकर्णाकृतिवत् करम् ॥ दक्षिणं तु करं कृत्वा गोकर्णाकृतिवत्पुनः । त्रिः पिबेदीक्षितं तोयमास्यं द्विः परिमार्जयेत् । मध्यमाभिर्मुखं पूर्वं तिसृभिः समुपस्पृशेत् । अंगुष्ठदेशिनीभ्यां च नासिके तदनन्तरम् ॥ अंगुष्ठानामिकाभ्यां च चक्षुषी समुपस्पृशेत् । कनिष्ठांगुष्ठयोः श्रोत्रं नाभिमंगुष्ठकेन च ॥ तलेन हृदयं स्पृष्ट्वा सर्वाभिः शिर एव तु । बाहू चाग्रेण संस्पृश्य ततः शुद्धो भवेन्नरः ॥ इत्यादि तत्र तत्र द्रष्टव्यम् । अत्र कनिष्ठांगुष्ठयोरिति तृतीयार्थे षष्ठी बोद्धव्या । तलम्—पाणिमध्यम् । देशिनी—तर्जनी । स्पष्टमन्यत् ॥ हृदयगामिना जलेन ब्राह्मणस्य कण्ठगामिना क्षत्रियस्य तालुगामिना च जलेन शुद्धिः । स्त्रीशूद्रौ तु ओष्ठद्वयेन जलस्पर्शादेव शुद्ध्यतः । अतस्तावन्मात्रेणैव जलेन तैस्तैराचमनं विधेयम् । "हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः । शुद्ध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥" इति याज्ञवल्क्योक्तेरित्यपि बोध्यम् ॥

द्धये ॥ ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनम् ॥ १ ॥ इति मंत्रमुक्त्वा दंतान्संशोध्य जिह्वोल्लेखं च कृत्वा द्वादश गंडूषांश्च वामभागे कृत्वा ॐकारं गायत्रीं च स्मृत्वा स्नानं कुर्यात् ॥ इति दंतधावनम् ॥

अथ स्नानप्रयोगः॥ आचारादर्शे कात्यायनः—यथोक्तमृत्तिकामार्द्रं गोमयं कुशान्कृष्णतिलान्सुरभीणि पुष्पाण्यादाय सुमना नद्यादिकं गत्वा तत्तीरे शुचौ देशे पृथक् पृथक् स्थापयेत् ॥ तदनंतरं सूर्याभिमुखस्तीर्थानि प्रार्थयेत् ॥ ॐ पुष्कराद्यानि तीर्थानि गंगाद्याः सरितस्तथा ॥ आगच्छंतु पवित्राणि स्नानकाले सदा मम ॥ १ ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ॥ याचितं देहि मे तीर्थं सर्वपापैः प्रमुच्यते ॥ २ ॥ अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव ॥ वरुणाय नम-

---

१ "कुर्याद् द्वादश गण्डूषान् पुरीषोत्सर्जने द्विजः। मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश ॥ भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत्।" पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा । ऋषयः पृष्ठतः सर्वे वामे गण्डूषमुत्सृजेत् ॥ इत्यत्र वेद्यम् ।
२ " मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः। तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् " ॥ " दन्तान् प्रक्षाल्य स्नायात् " इति छन्दोगपरिशिष्टात् । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत " इतिवत् स्नानाधिकारसिध्यर्थं दन्तधावनम् । व्यासस्तु—"प्रतिपद्दर्शषष्ठीषु नवम्यां श्राद्धसूरयोः। उपवासे जन्मदिने पर्णैः स्याद्दन्तधवनम् ॥ जिह्वाशुद्धिः सदा कार्या निषिद्धेऽपि दिने सदा। अलाभे दन्तकाष्ठानां निषिद्धे च तथा दिने ॥ अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥"—

स्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥३॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ ४ ॥ इति प्रार्थ्य ॥ ततः पाणिपादं प्रक्षाल्य नाभिमात्रजलं गत्वा कुशहस्तो बद्धशिख आचम्य देशकालौ संकीर्त्य ॥ मम कायवाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानं करिष्य इति संकल्प्य ॥ उरुꣳ हीत्यस्य शुनःशेप ऋषिर्वरुणो देवता त्रिष्टुप्छन्दः जलाभिमंत्रणे विनियोगः । ॐ उरुꣳ हिराजुाव्वरुणश्चुकारसूर्य्यायुपन्थामन्वेतुवाऽउँ । अपदेुपादुाप्रातिधातवेकरुताुपे वुक्ताहृदयाुव्विपंश्चित् ॥ नमोव्व-

---

-विष्णुः-"द्वादशांगुलिकं विप्रे काष्ठमाहुर्मनीषिणः। शूद्रविट्क्षत्रजातीनां नवषट्चतुरंगुलम् ॥" गर्गः-" दशांगुलं तु विप्राणां क्षत्रियाणां नवांगुलम् । अष्टांगुलं तु वैश्यानां शूद्राणां सप्तसंमितम् ॥ चतुरंगुलमात्रं तु नारीणां नात्र संशयः । " व्यासः-" प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् । पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखैस्तृणैश्च वा ॥ कण्टकिक्षीरवृक्षोत्थं द्वादशांगुलसंमितम् । कनिष्ठाग्रवत् स्थूलं च पर्वार्धकृतकूर्चकम् ॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा । शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ " शातातपः-" दन्तधावनमंगुल्या प्रत्यक्षं लवणं तथा । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ " विष्णुः-" प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च । दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥ उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च । पूर्वोत्तरे तु दिग्भागे सर्वान् कामानवाप्नुयात् ॥ " दन्तधावनाकरणे वाराहः-"अकृत्वा दन्तशौचं हि यो हि मामुपसर्पति । सर्वकालकृतं कर्म तेन चैकेन नश्यति" इत्यादि तत्र तत्र द्रष्टव्यम् ॥

रुणायाभिष्टितो व्वरुणस्यपाशः॥ इति न्युब्जांजलिहस्तेन तोयमामंत्र्य ॥ येतेशतमिति मंत्रस्य वामदेव ऋषिर्वरुणसवितृविष्णुविश्वमरुत्स्वर्का देवतास्त्रिष्टुप्छंदः तोयावर्तने विनियोगः। ॐ ये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः॥ तेभिर्न्नोऽअद्य सवितोत व्विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः॥ इति त्रिः प्रदक्षिणं जलमावर्त्तयेत्॥ततः॥सुमित्रियान इति मंत्रस्य प्रजापतिर्ऋषिरापो देवता यजुश्छंदः जलग्रहणे विनियोगः। दुर्मित्रिया इत्यस्य प्रजापतिर्ऋषिरापो देवता यजुश्छंदः अंजलिप्रक्षेपे विनियोगः।ॐ सुमित्रियानऽआपऽ ओषधयः सन्तु । इति जलाञ्जलिमादाय ॐ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि यञ्चवयन्द्विष्मः इति तीर्थतटे द्वेष्यं प्रति निषिञ्चेत्॥ततः कटिं बस्त्यूरुजंघे चरणौ करौ प्रत्येकं मृत्तोयाभ्यां त्रिस्त्रिः प्रक्षाल्य एकं पादं जलेऽपरं स्थले निधायाचामेत् ॥ ततः उदकं नमस्कृत्य। इदंविष्णुरित्यस्य मेधातिथिर्ऋषिः विष्णुर्देवता गायत्रीछंदः अनुलेपने विनियोगः।ॐ इदँव्विष्णुर्व्विचक्रमेत्रेधानि दधेपदम्॥ समूढमस्यपाꣳसुरे स्वाहा ॥ इति मृत्तिकयांगानि संस्पृश्य नाभिमात्रं जलं प्रविशेत्॥ आपोऽअस्मानित्यस्य प्रजापतिर्ऋषिरापो देवता अत्यष्टि-

श्छंदः मज्जनोन्मज्जने विनियोगः। ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु॥ विश्वं हिरिप्रम्प्रवहन्तिदेवीरिति मंत्रेण सूर्याभिमुखो निमज्जेत्[१]॥ ततः स्नात्वा-ॐ उदि दादिभ्युः शुचिरापूतऽएमि॥ इति निमज्ज्योन्मज्ज्याऽऽचम्य मानस्तोक इत्यस्य कुत्स ऋषिः रुद्रो देवता जगतीच्छंदः अंगानुलेपने विनियोगः। ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॥ मानो व्वीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वाहवामहे इति मंत्रेण गोमयेना-

---

१ विष्णुः—"स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि। पवित्राणां तथा जाप्ये दाने च विधिचोदिते॥" दक्षः—"अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम्॥ क्लिद्यन्ति च सुषुप्तस्य इन्द्रियाणि स्रवन्ति च। अङ्गानि समतां यान्ति उत्तमान्यधमानि च॥" देवलः—'नावगाहेदपो नग्नो वह्निं नाभिव्रजेत्पदा। शिरोऽभ्यक्तावशिष्टेन तैलेनाङ्गं न लेपयेत॥ याज्ञवल्क्यः—" उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः। तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विना॥" दक्षः—' प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः। यतेस्त्रिषवणं प्रोक्तं सकृच्च ब्रह्मचारिणः॥" विश्वामित्रः—' प्रातर्मध्याह्नयोः स्नानं वनस्थगृहमेधिनोः। दिनेदिने यतीनां तु स्नानं त्रिषवणं स्मृतम्॥" व्यासः—" स्नानं मध्यन्दिने कुर्यात् सुजीर्णेऽन्ने निरामयः।" स्नानभेदानाह-महर्षिः शंखः—" नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्। क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम्॥"

गानि विलिंपेत् ॥ ततो भस्मना स्नायात् । ततो दर्भैः कुंभमुद्रया मार्जनम् । इमंमेवरुणेति मंत्रस्य शुनःशेप ऋषिर्वरुणो देवता गायत्री छंदः । तत्त्वायामीत्यस्य शुनःशेप ऋषिर्वरुणो देवता त्रिष्टुप्छंदः । त्वन्नोऽअग्ने इति मंत्रस्य वामदेव ऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छंदः । सत्वन्नो इत्यस्य वामदेव ऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छंदः । मापोमौषधीरित्यस्य प्रजापतिर्ऋषिः हृदयशूलं देवता यजुश्छंदः । उदुत्तममिति मंत्रस्य शुनःशेपऋषिर्वरुणो देवता त्रिष्टुप्छंदः । मुंचंत्विति मंत्रस्य आथर्वणो भिषग्बंधुर्ऋषिरोषधयो देवता अनुष्टुप्छंदः । अवभृथेत्यस्य प्रजापतिर्ऋषिर्यज्ञो देवता अनुष्टुप्छंदः । अभिषेके विनियोगः ॥ ॐ इमम्मेँव्वरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचंके ॥ १ ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोद्ध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ २ ॥ ॐ त्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमꣳशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ३ ॥ ॐ सत्व-

---

१ दक्षांगुष्ठं पुरोंऽगुष्ठे ( वामांगुष्ठे ) क्षिप्त्वा हस्तद्वयेन च । सावकाशौ ( मध्यशून्यां ) मुष्टिकां च कुर्यात् सा कुम्भमुद्रिका ॥

न्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवय-
क्ष्वनोवरुणठंरराणोव्वीहिमृडीकठंसुहवोनऽएधि ॥ ४ ॥ ॐ
मापोमौषधीर्हिठंसीर्द्धाम्नोधाम्नोराजुंस्ततौव्वरुणनो मुञ्च ॥
यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततौवरुणनोमुञ्च ॥ ५ ॥
ॐउदुत्तमँव्वरुणपाशमस्मदवाधमंविमध्यमठंश्रथाय ॥ अ-
थांवयमादित्यव्रतेतवानागसोऽदितयेस्याम ॥६॥ॐमुञ्चन्तु-
माशपथ्यादथोव्वरुण्यादुत ॥ अथोयमस्यपड्वीशात्सर्वस्मा-
देवकिल्बिषात् ॥ ७ ॥ ॐ अवभृथ निचुम्पुणनिचेरुरसिनि-
चुम्पुणः ॥ अवदेवैर्देवकृतमेनो यासिषमवमर्त्यैर्मर्त्यकृतस्पु-
रुराव्णोदेवरिषस्पाहि ॥ ८॥ इत्यष्टभिर्मन्त्रैर्हस्तेन प्रत्येकं शिरसि
जलं प्रक्षिपेत् ॥ ततो वहति जले प्रवाहाभिमुखः स्थिरे सूर्याभि-
मुखो मौनी मज्जेत् ॥ तत आचम्य वक्ष्यमाणैरोंकारादिभिर्मंत्रैः प्रति-
मंत्रं कुशत्रयेण सजलेन प्रदक्षिणमात्मानं पावयेत्॥ उकारस्य पर-
ब्रह्मऋषिः परमात्मा देवता गायत्रीछंदः पावने विनियोगः।
सप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिव सिष्ठ
कश्यपा ऋषयः अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवा दे-
वता गायत्र्युष्णिगनुष्टुब्जगतीत्रिष्टुप्पंक्तिबृहतीछंदांसि पा-

वने विनियोगः । ॐ पुनातु ॥१॥ ॐ भूः पुनातु ॥ २॥ ॐ भुवः पुनातु ॥३॥ ॐ स्वः पुनातु ॥४॥ ॐ महः पुनातु ॥५॥ ॐ जनः पुनातु ॥६॥ ॐ तपः पुनातु ॥७॥ ॐ सत्यं पुनातु ॥८॥ तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्री छंदः पावने विनियोगः । ॐ तत्सवितुरीति सर्वं पुनातु ॥ आपोहिष्ठेति तिसृणां सिंधुद्वीप ऋषिरापो देवता गायत्री च्छंदः पावने विनियोगः । ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महेरणाय चक्षसे ॥६॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिव मातरः ॥७॥ तस्माऽअरंङ्गमामवो यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥८॥ ॐ इदमापरित्यस्य प्रजापतिर्ऋषिरापो देवता महापंक्तिश्छंदः । हविष्मतीरित्यस्य प्रजापतिर्ऋषिर्लिंगोक्ता देवता अनुष्टुप्छंदः । देवीराप इत्यस्य प्रजापतिर्ऋषिरापो देवता पंक्तिश्छंदः । कार्षिरसीत्यादित्रयाणां मंत्राणां प्रजापतिर्ऋषिः कार्षिरसीत्यक्षरचतुष्टयस्याज्यं देवता समुद्रस्य समाप इत्यस्य चापो देवता त्रयाणामनुष्टुप्छंदः । पावने विनियोगः । आपोदेवा इत्यस्य वरुण ऋषिरापो देवता त्रिष्टुप्छंदः । द्रुपदादिवेति मंत्रस्य प्रजापत्यश्विसरस्वत्य ऋषयः आपो

देवता अनुष्टुप्छंदः । शन्नोदेवीति मंत्रस्य सिंधुद्वीप ऋषिर्गा-
यत्री छंदः । अपाꣳरसमिति बृहस्पतिर्ऋषिः रसो देवता
अनुष्टुप्छंदः पावने विनियोगः । अपोदेवीरित्यस्य सिंधुर-
द्वीपऋषिरापो देवता न्यंकुसारिणी बृहतीच्छंदः पावने विनि-
योगः । पुनंतुमा इति मंत्रयोः प्रजापतिर्ऋषिः पितरो देवता
अनुष्टुप्छन्दः पावने विनियोगः । अग्नआयूमित्यस्य वैश्वा-
नर ऋषिरग्निर्देवता अनुष्टुप्छंदः । पुनंतुमेति मंत्रस्य प्रजाप-
तिर्ऋषिर्लिंगोक्ता देवता अनुष्टुप्छंदः । पवित्रेणपुनीहिमेति-
मंत्रस्यप्रजापतिर्ऋषिरग्निर्देवता गायत्रीच्छंदः । यत्तेपवित्र
इत्यस्य प्रजापतिर्ऋषिरग्निर्देवता तृतीयपादस्य ब्रह्मदेवता
गायत्री च्छंदः पावने विनियोगः । पवमान इत्यस्य प्रजाप-
तिर्ऋषिः सोमो देवता गायत्रीच्छंदः । उभाभ्यांदेवेति मंत्रस्य
प्रजापतिर्ऋषिः सविता देवता गायत्रीच्छंदः । वैश्वदेवीति-
मंत्रस्य प्रजापतिर्ऋषिर्विश्वेदेवा देवतास्त्रिष्टुप्छंदः पावने
विनियोगः ॥ चित्पतिर्मेतित्रयाणां प्रजापतिर्ऋषिः चित्पति-
र्मोवाकपतिर्मेत्युभयोः प्रजापतिर्देवता देवोमेत्यस्य सवितादे०
यजुश्छंदः पावने विनियोगः । इदमापꣳप्रवहतावद्यञ्चमलञ्च-
यत् ॥ यच्चाभिदुद्रोहानृतँयच्चशेपेऽअभीरुणम् ॥ आपोमा-
तस्मादेनसꣳपवमानश्च मुञ्चतु ॥ १ ॥ ॐ हविष्मंतीरिमाऽ

आपोहविष्माꣳ॥ ऽआविवासति ॥ हविष्मान्देवोऽअध्वरो हविष्माꣳ॥ ऽअस्तुसूर्य्यः ॥ १० ॥ ॐ देवीरापोऽअपान्न-पाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः । तन्देवेभ्यो देवत्रादत्तशुक्रपेभ्योयेषाम्भागस्थस्वाहा ॥ ११ ॥ ॐ कार्षिरसिसमुद्रस्य त्वाक्षित्याऽउन्नयामिसमापोऽअद्भिरग्मत स-मोषधीभिरोषधीः ॥ १२ ॥ ॐ अपोदेवी मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्च-न्याभिरिन्द्रमनयन्नत्यरातीः ॥ १३ ॥ ॐ द्रुपदादिवमुमुचानः । स्विन्नः स्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्य-मापः शुन्धन्तुमैनसः ॥ १४ ॥ ॐ शन्नोदेवीरभिष्टयऽआ-पोभवन्तुपीतये । शंय्योरभिस्रवन्तुनः ॥ १५ ॥ ॐ अपा-ꣳरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्य-योरसस्तँव्वोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृ-ह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १६ ॥ ॐ अपोदेवी-रुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादुज्जि-हतामोषधयः सुपिप्पलाः ॥ १७ ॥ ॐ पुनन्तुमापितरः

सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा ॥ १८ ॥ ॐ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ १९ ॥ ॐ अग्न आयूंषि पवस आ सुवोर्ज्जमिषं च नः ॥ आरे बाधस्व दुच्छुनाम् ॥ २० ॥ ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ २१ ॥ ॐ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ२॥ रनु ॥ २२ ॥ ॐ यत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥ २३ ॥ ॐ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ २४ ॥ ॐ उभाभ्यां देव सवितः पवित्रेण सवेन च ॥ माम्पुनीहि विश्वतः ॥ २५ ॥ ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ॥ २६ ॥ ॐ चित्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ २७ ॥

ॐ वाकपतिर्मापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रंपूतस्ययत्कामःपुनेतच्छकेयम् ॥२८॥ ॐ देवोमांसवितापुनात्वच्छिद्रेण पवित्रेणसूर्य्यस्यरश्मि- भिः । तस्यंतेपवित्रपते पवित्रंपूतस्ययत्कामः पुनेतच्छके- यम् ॥ २९ ॥ एवं मार्ज्जनं कृत्वा । अपाघमिति मंत्रस्य शुनः- शेप ऋषिर्लिंगोक्ता देवता अनुष्टुप्छंदः अपामार्जने विनि- योगः ॐ अपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपामा- र्गत्वमस्मदपदुःष्वप्न्यंसुव ॥ इति मंत्रेणापामार्गैस्त्रिभिर्मा- र्जयेत् ॥ तत ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्प- रि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ २८ ॥ इति मंत्रेण दूर्वाभिस्त्रिभिर्मार्जयेत् । ततः पूर्ववत् ॐ इमं मे व्वरुणेत्यादिमंत्रैः शिरसि जलं निक्षिपेत् । ततोऽन्तर्जले मग्नोऽघमर्षणं द्रुपदां च आयं गौरिति वा ऋचं त्रिरावर्तयेत् ॥ ऋतंच सत्यंचेति मंत्रस्य अघमर्षण ऋषिः । भाववृतं दैवतम् । अनुष्टुप्छंदः अघम- र्षणे विनियोगः । द्रुपदादिवेति कोकिलो राजपुत्र ऋषिः । आपो देवता अनुष्टुप्छंदः अघमर्षणे विनियोगः । आयं- गौरित्येतेषां त्रयाणां मंत्राणां प्रजापतिर्ऋषिरग्निः परावररूपो देवता गायत्रीच्छंदः अघमर्षणे विनियोगः । ॐ ऋतं च

सत्यं चाभीद्धात्तपसोऽध्यजायत । ततोरात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधिसंवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथोस्वः ॥ १ ॥ ॐ द्रुपदादिव० इति त्रिः पठेत् । ॐ आयङ्गौः पृश्निरक्रमीदसंदन्मातरम्पुरः पितरञ्चप्रयन्त्स्वः इति वा त्रिः पठेत् । सशिरसं प्राणायामं वा त्रिः कुर्यात् ॥ यद्वा परमात्मानं विष्णुं शेषशायिनं सायुधं सश्रीकं ध्यायेत् ॥

ततः तीर्थप्रार्थना । " ॐ विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ॥ पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तकात् ॥ १ ॥ विष्णोः पादार्घसंभूते गंगे त्रिपथगामिनि । धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥ २ ॥ तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ॥ दिवि भुव्यंतरिक्षे च तानि ते संति जाह्नवि ॥ ३ ॥ नंदिनीत्येव ते नाम देवेषु नलिनीति च ॥ वृंदा पृथ्वी च सुभगा विश्वकाया शिवासिता ॥ ४ ॥ विद्याधरी सुप्रसन्ना तथा लोकप्रसाधनी ॥ क्षेम्या च जाह्नवी चैव शांता शांतिप्रदायिनी ॥ ५ ॥ एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ॥ भवेत्संनिहिता तस्य गङ्गा त्रिपथगामिनी ॥ ६ ॥ नमामि

गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ ॥ ७ ॥ या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् ॥ सा गतिः सर्वजन्तूनां जाह्नवीतीरवासिनाम् ॥ ८ ॥ " इति पठित्वा नाभिमात्रजलं गतः सन् स्नानांगतर्पणं कुर्यात् ॥

अथ तर्पणप्रयोगः ॥ ॐ मोदस्तृप्यताम् ॥ १ ॥ ॐ प्रमोदस्तृप्य० ॥ २ ॥ ॐ सुमुखस्तृ० ॥ ३ ॥ ॐ दुर्मुखस्तृप्य० ॥ ४ ॥ ॐ अविघ्नस्तृ० ॥ ५ ॥ ॐ विघ्नकर्ता तृ० ॥ ॥ ६ ॥ ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृप्यन्ताम् । ॐ भुवर्देवास्तृप्यन्ताम् । ॐ स्वर्देवास्तृप्यन्ताम् । ॐ भूर्भुवःस्वर्देवास्तृप्यन्ताम् ॥ ७ ॥ ॐ गौतमादय ऋषयस्तृप्यन्ताम् ॥ ८ ॥ इति देवतीर्थेन एकैकमंजलिं जले प्राङ्मुखः क्षिपेत् । अथोदङ्मुखो निवातयूर्ध्वजुषः प्राजापत्येन तीर्थेन सनकादींस्तर्पयेत् । ॐ सनकादयो मनुष्यास्तृप्यन्ताम् ॥ ॥ २ ॥ ॐ भूर्ऋषयस्तृप्यन्ताम् ॐ भुवर्ऋषयस्तृप्यं० ॐ स्वः ऋषयस्तृप्यन्ताम् ॐ भूर्भुवः स्वः ऋषयस्तृप्यन्ताम् । ततोऽपसव्यं दक्षिणाभिमुखः पितृतीर्थेन कृष्णतिलोदकैः कव्यवाडनलादींस्तर्पयेत् ॥ ॐ कव्यवाडनलादयो देवपितरस्तृप्यन्ताम ३ ॥ ॐ भूः पितरस्तृ० । ॐ भुवः पितरस्तृ० । ॐ स्वः पितरस्तृ० । ॐ भूर्भुवः स्वः पितरस्तृप्यन्ताम् ॥ ३ ॥

( इति त्रयोऽञ्जलयः ) ॐ अस्मत्पितृपितामहप्रपितामहास्तृप्यन्ताम् ३ ॥ ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यन्ताम् ३ ॥ ॐ आब्रह्मस्तम्बपर्यंतं जगत्तृप्यताम् ॥ एवं स्नानांगतर्पणं कृत्वा यक्ष्मणे जलं दद्यात् ॥ " ॐ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ १ ॥ " ततस्तीरमागत्य ॥ " अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ " इति जलाञ्जलिं तटे निक्षिपेत् । ततः—"लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः । ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः " इति स्वदक्षिणभागे शिखां निष्पीडयेत् ॥ इति स्नानांगतर्पणं कृत्वा जलाद्बहिर्निष्क्रम्य अहतं श्वेतं धौतम् अष्टहस्तं सदशं ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूचारायस्पोषमभिसंव्ययिष्ये इति मंत्रेण वस्त्रं परिधाय उपवस्त्रं गृहीत्वानंतरं कुशासने प्रागास्यो वोदगास्य उपविशेत् आचामेत् ॥ इति नद्यादिषु स्नानप्रयोगः ॥

---

१ आन्हिकसूत्रावल्यां विष्णुपुराणेः—" होमदेवार्चनाद्यासु क्रियासु पठने तथा । नैकवस्त्रः प्रवर्तेत द्विजो नाचमने जपे ॥ " व्याघ्रपादः—' नैकवस्त्रो द्विजः कुर्याद् भोजनं च सुरार्चनम् ।" आह्निककारिकासुः—" एकवस्त्रं विना पात्रं सव्ययज्ञोपवीतकम् । प्रत्यक्षं तु नदीशौचं कुर्वन् शूद्रत्वमाप्नुयात् ॥"

अथ गृहस्थानां गृहे नित्यस्नानम् ॥ गृहे उष्णोदकेन स्नानं न तु शीतोदकेन । तद्विधिश्च । पात्रे शीतोदकं प्रक्षिप्य तदुपरि उष्णोदकेनापूर्य ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शंयोरभिस्रवन्तुनः ॥ १ ॥ आपः पुनन्तु० ॥ २ ॥ द्रुपदा-दिव० ॥ ३ ॥ ऋतं च सत्यं० ॥ ४ ॥ आपोहिष्ठा० ॥ ५ ॥ इति पंचभिर्ऋग्भिरभिमंत्र्य इमंमे वरुणेत्यादिना तीर्थानि स्मरन् स्नायात् ॥ गृहे स्नाने संकल्पाचमनमघमर्षणं तर्पणं च कार्यम् । एवं स्नात्वा वस्त्रेण पाणिना वा जलापनयनं कृत्वा शुष्कं शुभ्रमं-हतं कार्पासवस्त्रं परिधाय स्नानार्द्रवस्त्रमूर्ध्वमुत्तारयेत् ॥ ( विक-च्छोनुत्तरीयश्च नग्नश्चावस्त्र एव च। श्रौतस्मार्त्ते नैव कुर्यात् ) इति गृहे प्रातर्नित्यस्नानम् ॥

अथ तिलकधारणम् ॥ तत्रादौ वामहस्ते दक्षिणहस्तेन गंगा-दितीर्थमृत्तिकां वा गार्हपत्यौपासनाग्निभस्म गृहीत्वा पश्चादुदक-

---

१ वृद्धमनुः—"संक्रान्त्यां रविवारे च सप्तम्यां राहुदर्शने । आरोग्ये पुत्र-मित्रार्थे न स्नायादुष्णवारिणा ॥ मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा । अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥" २ "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद् विजानीयात् सर्वकर्मसु पावनम् ॥ " इति ब्रह्मपुराणे । ईषद्धौतम्=अरजकादिधौतम् इति विवाहपद्धतिव्याख्यायां नित्यानुरा-गिण्यां निबाहूरामः। ३ प्रयोगपारिजाते—"ललाटे तिलकं कृत्वा सन्ध्याकर्म समाचरेत् । अकृत्वा भालतिलकं तस्य कर्म निरर्थकम् ॥"

मिश्रणानंतरं दक्षिणहस्तेन भस्म मर्दयेत् ॥ तत्र मंत्राः । ॐ अग्निरिति भस्म ॐ वायुरिति भस्म ॐ जलमिति भस्म ॐ स्थलमिति भस्म ॐ व्योमेति भस्म सर्वठं ह वा इदं भस्म ॐ मन एतानि चक्षूंषि भस्मानीति भस्माभिमंत्र्य । ॐ त्र्यंम्बकँय्यजामहेसुगान्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिंव बन्धंनान्मृत्योर्म्मुक्षीयुमामृतांत् ॥ ॐ प्रसह्यभस्मनायोनिमपश्च पृथिवीमग्ने । सठंसृज्यमातृभिष्ट्वंज्योतिष्मान् पुनरासदः ॥ ॐ त्र्यायुषञ्जमदंग्नेरितिललाटे । ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । ॐ यद्देवेषुं त्र्यायुषमिति दक्षिणांसे । ॐ तन्नोंऽअस्तु त्र्यायुषमिति हृदि । एतैर्मंत्रैर्ललाटादिषु धारयेत् । ततो रुद्राक्षमालाधारणम् ॥ " विभूतिर्यस्य नो भाले नांगे रुद्राक्षधारणम् । नहि वाण्यां शिवोच्चारस्तं त्यजेदंत्यजं यथा ॥ १ ॥ "

अथ संध्याप्रयोगः ॥ वामे बहून् कुशान् दक्षिणे पाणौ सपवित्रं कुशत्रयं च धृत्वा सप्रणवगायत्र्या शिखां बद्ध्वा ऐशान्यभिमुख

---

१ "प्रातः ससलिलं भस्म मध्याह्ने गन्धमिश्रितम् । सायाह्ने निर्जलं भस्म एवं भस्म विलेपयेत् ॥" २ यमः–"यदह्ना क्रियते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां सन्ध्यां प्राणायामैश्च हन्ति तत् ॥ यद्रात्र्या क्रियते पापं कर्मणा मनसा गिरा । पूर्वां सन्ध्यामुपासीनः प्राणायामैर्व्यपोहति ॥ सन्ध्यामुपासते ये तु सततं संशित–

आचम्य ऋतमित्यभिमंत्र्य पुनराचामेत् ॥ १ ॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥ ॐ अपवित्रः पवित्रो वेत्यस्य वामदेव ऋषिः । विष्णुर्देवता गायत्री छंदः । हृदि पवित्रकरणे विनियोगः ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा । यः स्मरेत्पुंड-

---

-व्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् । पूजां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च ॥ अनागतां तु ये पूर्वामतीतां ये च पश्चिमाम् । विप्राः सन्ध्यां न तिष्ठन्ति वृषलास्त उदाहृताः ॥ दक्षः—"उपासते न यः संध्यां ब्राह्मणो हि विशेषतः । स जीवन्नेव शूद्रत्वं मृतः श्वा चैव जायते ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग् भवेत् ॥" पुलस्त्यः—"सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् । मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥" "अहोरात्रयोः सन्धौ या क्रिया विधीयते सा सन्ध्या । तत्र अहः सम्पूर्णादित्यमण्डलदर्शनयोग्यः कालः । तद्विपरीता रात्रिः । यस्मिन् काल खण्डमण्डलस्योपलब्धिः स सन्धिः ।" इति मिताक्षरायां याज्ञवल्क्यस्मृतिव्याख्यायां श्रीविज्ञानेश्वरः ॥ "सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते" इति यद्यपि सन्ध्याया विनिवृत्तिः श्रूयते, तथापि अञ्जलिप्रक्षेपादिकं कुर्यात् । "सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्" इति पैठीनसिस्मरणात् ( मिताक्षरा ) ॥

रीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं दर्भैर्जलेन संप्रोक्ष्य । ॐ पृथिवीत्यस्य मेरुपृष्ठ ऋषिः । कूर्मो देवता । सुतलं छंदः । आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ इति भूमिं प्रार्थयेत् ॥

अथ संकल्पः॥ ॐ तत्सदद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे तदादौ श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्तांतर्गतब्रह्मावर्त्तैकदेशे कुमारिकानामक्षेत्रे श्रीगंगायमुनयोरमुकदिग्भागे नर्मदाया उत्तरे श्रीबौद्धावतारे अमुकनामसंवत्सरे अमुकायने अमुकर्त्तौ अमुकमासे अमुकपक्षे अमुकतिथावमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकदेवगुर्वादिशेषेषु ग्रहेषु यथाऽस्थानस्थितेषु एवं ग्रहगुणविशिष्टायां तिथौ अमुकगोत्रोऽमुकशर्माहं श्रुतिस्मृतिपुराणोक्तफलसिद्ध्यर्थं मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसन्ध्योपासनं करिष्य इति संकल्प्य वारिणात्मानं वेष्टयित्वा सप्रणवगायत्र्या रक्षां कुर्यात् । ततः ॐ कारस्य ब्रह्मा ऋषिर्गायत्री छंदोऽग्निर्देवता शुक्लो वर्णः सर्वकर्मारंभे विनियोगः ॥ ॐ सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि । अग्निवाय्वादित्य-

बृहस्पतिवरुणेंद्रविश्वेदेवा देवताः।अनादिष्टप्रायश्चित्ते प्राणायामे विनियोगः ॥ गायत्र्या विश्वामित्र ऋषिर्गायत्रीछंदः सविता देवताऽग्निर्मुखमुपनयने प्राणायामे विनियोगः ॥ ॐ शिरसः प्रजापतिर्ऋषिर्ब्रह्माग्निवायुसूर्या देवताः यजुश्छन्दः प्राणायामे विनियोगः ॥ इति ऋष्यादिकं स्मृत्वा । [१]बद्धासनः सम्मीलितनयनो मौनी प्राणायामत्रयं कुर्यात् ॥ तत्र वायोरादानकाले पूर[२]कनामा प्राणायामस्तत्र श्यामं चतुर्भुजं विष्णुं नाभौ ध्यायेत् । धारणकाले कुंभकस्तत्र कमलासनं रक्तवर्णं ब्रह्माणं चतुर्मुखं हृदि ध्यायेत् । त्यागकाले रेचकस्तत्र श्वेतं त्रिनेत्रं शिवं ललाटदेशे ध्यायेत् । त्रिष्वप्येतेषु प्रत्येकं त्रिर्मंत्राभ्यासः । प्रत्येकमोंकारादिसप्तव्याहृतयः ॥ ॐकारादिसावित्री ॐ कारद्वयमध्यस्थः

---

१ "बद्ध्वाऽऽसनं नियम्य स्वं स्मृत्वा चाऽऽर्षादिकं तथा । संनिमीलितदृङ् मौनी प्राणायामं समभ्यसेत् ॥" इति बृहस्पतिः ॥ २ बाह्यवायोरन्तःप्रवेशनं पूरकः । प्रवेशितस्य धारणं कुम्भकः । धृतस्य बहिर्निस्सारणं रेचकः । योगियाज्ञवल्क्यः—"शनैर्नासापुटाद्वायुमुत्सृजेन्नतु वेगतः" इति । मनुः— "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥" तथा च—यत्रांगुष्ठेन दक्षिणनासापुटं प्रपीड्य वामनासापुटद्वारा बाह्यो वायुरादीयते स पूरकः । दक्षिणनासापुटे प्रपीडिते एव यत्रानामिकाकनिष्ठाभ्यां वामनासापुटमपि प्रपीड्य प्रवेशितो वायुर्ध्रियते स कुम्भकः । वामनासापुटे प्रपीडिते एव यत्र दक्षिणनासापुटतोऽङ्गुष्ठमपसार्य दक्षिणनासापुटद्वारा शनैः शनैर्वायुर्निःसार्यते सोऽयं रेचक इति परः सारः ॥

शिरश्चेति मंत्रस्तस्य स्वरूपम् ॥ "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्संवितुवरेंण्यम्भर्गो देवस्यंधीमहि ॥ धियो योनंः प्रयोदयांत् ॥ ॐ आपो ज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोम्" इति प्राणायामः॥ ततः ॐसूर्यश्चेति ब्रह्मा ऋषिः प्रकृतिश्छंदः सूर्यो देवता अपामुपस्पर्शने विनियोगः ॥ ॐ सूयश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहमापोऽमृतयोनोसूर्य्ये ज्योतिषि जुहोमि स्वाहा इति प्रातराचामेत् ॥ ("ॐ आपः पुनन्त्विति विष्णुऋषिरनुष्टुप्छंद आपो देवता अपामुपस्पर्शने विनियोगः ॥ ॐ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु मां पुनन्तु ब्रह्मणस्पतिब्रह्मपूता पुनातु मां यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम ॥ सर्वं पुनंतु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा " इति मध्याह्न आचामेत् )॥ ( ॐअग्निश्चमेति रुद्र ऋषिः प्रकृतिश्छंदोऽग्निर्देवता अपामुपस्पशने विनि-

१ "सायमग्निश्चमेत्युक्त्वा प्रातः सूर्यश्चमा पिबेत् ।आपः पुनन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् ॥ आन्तरं खिद्यते यस्माक्तस्मादाचमनं स्मृतम् । प्राणायामत्रयं कार्यं सन्ध्यास्वथ तिसृष्वपि ॥ प्राणस्याऽऽयमनं कृत्वा आचामेत्प्रयतोऽपि सन् ॥"

योगः ॥ "ॐ अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुंपतु यत्किंचिद्दुरितं मयि इदमहमापोऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा" इति सायमाचामेत् )। तत आपोहिष्ठेत्यादित्र्यृचस्य सप्तभिः पदैः शिरसि, अष्टमेन भूमौ, नवमेनापि शिरसि कुशत्रयेण जलं क्षिपेत्। ॐ आपोहिष्ठेत्यादित्र्यृचस्य सिंधुद्वीप ऋषिर्गायत्री छंदः आपो देवता मार्ज्जने विनियोगः ॥ ॐ आपोहिष्ठामयो भुवः। ॐ तानऽऊर्जेदधातन। ॐ महेरणायचक्षसे। ॐ योवः शिवतमोरसः। ॐ तस्यभाजयतेहनः। ॐ उशतीरिवमातरः। ॐ तस्माऽअरङ्गमामवो। ॐ यस्यक्षयाय जिन्वथ[1]। ॐ आपोजनयथाचनः ॥ इति मार्ज्जनम् ॥ ततः करेण जलमादाय वारत्रयं द्रुपदां पठित्वा तज्जलं शिरसि क्षिपेत्। ॐ द्रुपदादिवेति कोकिलो राजपुत्र ऋषिः। आपो देवता। अनुष्टुप्छंदः। अघमर्षणे विनियोगः ॥ ॐ द्रुपदादिवमुमुचानः स्विन्नः स्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्ज्यमापः शुंध-

१ "व्यासः—विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय जित्।"

न्तुमैनंस॒॑ ॥ ततः करस्थजलं नासायां संयोज्य आयतांसुरनायतासुर्वा त्रिः सकृद्वाऽघमर्षणं जपेत् । ॐ ऋतं च सत्यं चेति अघमर्षणसूक्तस्याघमर्षण ऋषिरनुष्टुप्छंदो भाववृत्तो देवता अश्वमेधावभृथे विनियोगः ॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथोस्वः ॥ ततः ॐ अंतश्चरसीति तिरश्चीन ऋषिरनुष्टुप्छंदः आपो देवता आचमने विनियोगः ॥ अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोमृतम् ॥ इति अनेनाचामेत् ॥ ततः अर्घ्यदानम् ॥ उत्थाय ॐ भूर्भुवः स्वरिति गायत्र्या पुष्पमिश्रं जलं सूर्याभिमुखो वारत्रयं प्रक्षिपेत् ॥ कालातिक्रमे सति ॐ आकृष्णेन इति मंत्रेण चतुर्थार्घ्यं दद्यात् ।

---

१ आयतासुः संयतप्राणः । २ शौनकः—“ तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ॥ ” ३ “ उत्थायार्कं प्रतिक्षिपेत् त्रिकेणाञ्जलिमम्भसः ” इति **कात्यायनः** । प्रणवः, व्याहृतयः, सावित्रीति त्रिकम् ॥ ४ “ पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीनः सम्यग्ग्रह विभावनात् ॥ ” **मनुः**—“ जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥ ” **याज्ञवल्क्यः**—“ प्रातः–

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिर्ऋषिः। अग्निवायुसूर्या देवताः गायत्र्युष्णिगनुष्टुभश्छन्दांसि। ॐ तत्सवितुरित्यस्य विश्वामित्र ऋषिः। सविता देवता। गायत्री छंदः। अर्घ्यदाने विनियोगः॥ ॐभूर्भुवःस्वः ॐतत्सवितु० ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः। इदमर्घ्यं दत्तं न मम असौ आदित्यो ब्रह्म। इत्यर्घ्यं दत्त्वा प्रातः सायं च कृताञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः सूर्यं ध्यायन्नुपतिष्ठेत् एभिर्मंत्रैः। ॐ उद्वयन्तमित्यस्य हिरण्यस्तूप ऋषिरनुष्टुप्छंदः॥ सूर्यो देवता॥ सूर्योपस्थाने विनियोगः॥ ॐ उद्वयन्तमसस्परिस्वः पश्यन्तऽउत्तरम्॥ देवन्देवत्रासूर्यमगन्मज्योतिरुत्तमम्॥ १॥ ॐ उदुत्यमित्यस्य प्रस्कण्व ऋषिर्गायत्री छंदः॥ सूर्यो देवता॥ सूर्योपस्थाने विनियोगः॥ ॐ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः॥ दृशेविश्वाय सूर्यम्॥ २॥ ॐ चित्रमित्यस्य कौत्स ऋषिस्त्रिष्टुप्छंदः सूर्यो देवता सूर्योपस्थाने विनियोगः॥ ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्यवरु-

---

–सन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्यां अर्धास्तमितभास्करात्॥" संवर्तः–अत्र च फलवत्त्वाज्जपः प्रधानं स्थानासने त्वङ्ग। संध्याकालश्च मुहूर्तमात्रम्। "ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम्। सन्ध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ च सा स्मृता॥" इत्युक्तेरिति ध्येयम्॥

णस्याग्नेः ॥ आप्रा द्यावांपृथिवीऽअन्तरिक्षꣳ सूर्यऽआत्माजगतस्तस्थुषश्च ॥ ३ ॥ ॐ तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिरक्षरातीतिपुर उष्णिक्छंदः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥ ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरंत् ॥ पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इत्युपस्थाय प्रदक्षिणीकृत्योपविश्य ॥ ततः अनामिकाङ्गुष्ठाभ्यां ॐ हृदयाय नमः ॥ ॐ भूः शिरसे स्वाहा ॥ ॐ भुवः शिखायै वषट् ॥ ॐ स्वः कवचाय हुम् ॥ ॐ भूर्भुवः स्वर्नेत्राभ्यां वौषट् ॥ ॐ भूर्भुवः स्वः अस्त्राय फट् ॥ इत्यंगानि त्रिरावर्त्य ॥ ॐ तत्पदं पातु मे पादौ जंघे मे सवितुः पदम् ॥ वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ १ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा ॥ धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥ २ ॥ ललाटे नः पदं पातु मूर्द्धानं मे प्रचोदयात् ॥ इति गायत्रीन्यासं च कुर्यात् ॥ ततः ॐकारस्य ब्रह्मा ऋषिर्गायत्री छंदोऽग्निर्देवता ॥ जपे विनियोगः॥

---

१ "ऋषिच्छन्दोदेवतानां कर्म्मणे विनियोजनम् । विनियोगः स आदिष्टो मन्त्रे मन्त्रे प्रयुज्यते ॥" इति ॥

ॐ त्रिर्व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छं-
दांस्यग्निवाय्वादित्या देवताः जपे विनियोगः ॥ ॐ
गायत्र्या विश्वामित्र ऋषिः । गायत्री छंदः । सविता देवता
जपे विनियोगः ॥ इति ऋष्यादिकं स्मृत्वा ॥ ॐ मुक्ताविद्रुम-
हेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां
तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशां शूलं
कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहन्तीं भजे ॥
॥ १ ॥ इति गायत्रीं ध्यायेत् ॥ ततः ॐ तेजोसीति देवा ऋ-
षयः शुक्रं दैवतं गायत्री छन्दो गायत्र्यावाहने विनियोगः ॥
ॐ तेजोऽसिशुक्रमस्यमृतमसिधामनामासिप्रियन्देवानाम-
नाधृष्टन्देवयजनमसि ॥ इति गायत्रीमावाह्य ॐतुरीयस्य वि-
मल ऋषिः परमात्मा देवता गायत्री छंदः गायत्र्युपस्थाने
विनियोगः ॥ ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्प-
द्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय
परोरजसे सावदोम् ॥ इत्युपस्थाय प्रातः प्राङ्मुखो मध्याह्ने
सूर्याभिमुखस्तिष्ठन् सायं पश्चिमाभिमुख उपविष्ट उक्तविधिना सहस्रं
शतं वा गायत्रीं जपेत्[1] ॥ जप्यस्वरूपं यथा ॐभूर्भुवः स्वः

---

१ "ॐकारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च । गायत्री प्रणवश्चान्ते जपो
वमुदाहृतः ॥ उपांशुजपयुक्तस्य शस्याच्छतगुणो भवेत् । साहस्रो मानसः प्रोक्तो-

तत्स॑वितुर्वरे॑ण्यम्भर्गो॑ दे॒वस्य॑ धीमहि ॥ धियो॒ यो नः॑ प्रचो॒दया॑त् ॐ ॥ ततो जपांते कवचं पठित्वा देवागाविति पठेत् ॥ ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् । इति संध्याप्रयोगः ॥

अथ ब्रह्मयज्ञः ॥ तत्र कात्यायनः—देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेनाहं यक्ष्ये इति संकल्प्य। कुशासने प्राङ्मुखोपविष्टः ब्रह्मयज्ञं कुर्यात् तद्यथा ॥ ॐ वि॒भ्राड्बृ॒हत्पि॑बतु सो॒म्यम्मधु॒वायु॒र्द॑धद्य॒ज्ञप॑ता॒वविह्रुतम् ॥ वाततं॑जू॒तोयोऽअ॑भि॒र-

---

-यस्माद् ध्यानमयो हि सः ॥ नोच्चैर्जपं बुधः कुर्यात्सावित्र्यास्तु विशेषतः ॥ ” शंस्यः उच्चैर्जपः । यत्समीपस्थोऽपि परो न शृणोति तदुपांशु । यत्र जिह्वौष्ठं मनागपि न चलति स मानसः ॥ “ न तथाऽन्येन जप्येन पापं निर्दहति द्विजः । यथा सावित्रीजप्येन सर्वपापैः प्रमुच्यते ॥ ” स्मृत्यन्तरे—“सम्पुटैकषडोङ्कारा गायत्री त्रिविधा मता । तत्रैकप्रणवा ग्राह्या गृहस्थैर्ब्रह्मचारिभिः ॥ गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् । अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ॥ संपुटां च षडोङ्कारां गायत्रीं च जपेद्यतिः ॥ ” इति ॥ १ ब्रह्मयज्ञविधिमाह योगियाज्ञवल्क्यः—“प्रदक्षिणं समावृत्य आसने उपविश्य च । दर्भेषु दर्भपाणिः सन् प्राङ्मुखस्तु कृताञ्जलिः ॥ स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् । ऋचा च यजुषां साम्नां गाथागुह्यमथापि वा ॥ आदावारभ्य वेदस्तु स्नात्वोपसुपरि क्रमात । यदधीतेऽन्वहं भक्त्या स स्वाध्याय इति स्मृतः ॥ कात्यायनपरिशिष्टसूत्रे—“ विभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमण्डलब्राह्मणैरित्युपस्थाय, प्रदक्षिणीकृत्य नमस्कृत्य उपविशेद् दर्भेषु दर्भपाणिः, स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम् ॥”

क्षंतित्वमनांप्रजाः पुपोष पुरुधाव्विराजनि ॥ १ ॥ उदुत्य-
ञ्जातवेदसंदेवव्वँहन्ति केतवंः ॥ दृशेव्विश्वायसूर्य्यम् ॥२॥
येनांपावकचक्षंसाभुरण्यन्तञ्जना २॥ ऽअनु ॥ त्वव्वँरुणप-
श्यंसि ॥ ३॥ दैव्यांवध्वर्यूऽआगतठं रथेनसूर्य्यत्वचा मद्ध्वा-
यज्ञठंसमंञ्जाथे ॥ तम्प्रत्नथायँव्वेनश्चित्रन्देवानांम् ॥ ४ ॥
तम्प्रत्नथांपूर्वथांव्विश्वथेमथांज्ज्येष्ठतांतिम्बर्हिषदंठंस्वर्वि-
दम् ॥ प्रतीचीनव्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुव-
र्द्धसे ॥ ५ ॥ अयँव्वेनश्चोदयत्पृश्निगर्भाज्ज्योतिर्जरायुर-
जंसो व्विमाने ॥ इममपाठं संङ्गमे सूर्य्यस्यशिशुन्नविप्रा-
मतिभीरिहन्ति ॥ ६ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मि-
त्रस्यव्वरुणस्याग्नेः ॥ आप्राद्यावांपृथिवीऽअन्तरिक्षठंसूर्यऽ-
आत्माजगतस्तस्थुषश्च ॥ ७ ॥ आनऽइडाभिर्व्विदथेसुश-
स्तिव्विश्वानरः सविताद्देवऽएतु ॥ अपियथांयुवानोमत्सथा-
नोव्विश्वञ्जगदभिपित्वेमनीषा ॥ ८ ॥ यदद्यकच्चवृत्रहन्नुद-
गाऽअभिसूर्य्य ॥ सर्व्वन्तादिन्द्रतेव्वशे ॥ ९ ॥ तरणिर्व्विश्व-
दर्शतोज्योतिष्कृदसिसूर्य ॥ व्विश्वमाभांसिरोचनम् ॥१०॥

तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मध्या कर्त्तोर्व्विततंसञ्जभार॥
यदेदयुक्तहरितः सधस्थादाद्रात्रीव्वासस्तनुतेसिमस्मै॥११॥
तन्मित्रस्यव्वरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥
अनन्तमन्यद्रुशदस्यपाजः कृष्णमन्यद्धरितः सम्भरन्ति॥
॥ १२ ॥ बण्महाँ २॥ऽअसिसूर्य्यबडादित्यमहाँ २॥ऽअसि ॥
महस्तेसतो महिमापनस्यतेद्धादेवमहाँ २॥ऽ असि ॥ १३ ॥
बट्सूर्य्यश्रवसामहाँ २॥ऽअसि सत्रादेवमहाँ २॥ऽअसि ॥ मह्ना-
देवानामसुर्य्यः पुरोहितो व्विभुज्योतिरदाभ्यम् ॥ १४ ॥
श्रायन्तऽइव सूर्य्यंव्विश्वेदिन्द्रस्य भक्षत ॥ वसूनिजातेज-
नमानऽ ओजसाप्रतिभागन्नदीधिम ॥ १५ ॥ अद्यादेवाऽ
उदितासूर्य्यस्यनिरंहसः पिपृतानिरवद्यात् ॥ तन्नो मित्रो
व्वरुणोमा महन्तामदितिः सिन्धुः पृथिवी ऽउतद्यौः ॥१६॥
आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्य-
येनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १७ ॥

अथ पुरुषसूक्तम् ॥ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्र-
पात् ॥ सभूमिंसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुष

ऽएवेदꣳसर्व्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्यायाँश्च
पूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥
त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोविष्व-
ङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोविराडजाय-
तविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमि-
मथोपुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥
पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ ६ ॥ तस्माद्य-
ज्ञात्सर्वहुतऽऋचःसामानिजज्ञिरे ॥ छन्दाꣳसि जज्ञिरेत-
स्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वाऽअजायन्तये-
केचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजा-
वयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन
देवाऽअयजन्तसाध्याऋषयश्चये ॥ ९ ॥ यत्पुरुषंव्यदधुः
कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपा-
दाऽउच्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥
ऊरू तदस्ययद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत ॥ ११ ॥

चन्द्रमामनसो जातश्चक्षोः सूर्यो॑ऽअजायत ॥ श्रोत्राद्वायुश्च
प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरि-
क्षᳪ शीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्त-
थालोकाँ२ऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषा देवाय-
ज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥
॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥
देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनय-
ज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकम्म-
हिमानः सचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ १६ ॥

अथ शिवसंकल्पः ॥ ॐ यज्जाग्रतोदूरमुदैतिदैवन्तदुसुप्त-
स्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः
शिवसङ्कल्पमस्तु ॥ १ ॥ येनकर्माण्यपसोमनीषिणोयज्ञे
कृण्वन्तिविदथेषुधीराः ॥ यदपूर्वंय्यक्षमन्तःप्रजानान्तन्मे
मनः शिवसङ्कल्पमस्तु ॥ २ ॥ यत्प्रज्ञानमुतचेतोधृतिश्चय-
ज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनकर्मक्रिय-
तेतन्मेमनः शिवसंकल्पमस्तु ॥ ३ ॥ येनेदम्भूतम्भुवनम्भ-

विष्यत्परिगृहीतममृतेनसर्वम् ॥ येनयज्ञस्तायते सप्तहोता
तन्मेमनः शिवसंकल्पमस्तु ॥४॥ यस्मिन्नृचः सामयजूंषि
यस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिंश्चित्तं सर्व-
मोतम्प्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ५ ॥ सुषार-
थिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्र-
तिष्ठंयदजिरञ्जविष्ठन्तन्मेमनः शिवसंकल्पमस्तु ॥ ६ ॥

अथ मण्डलब्राह्मणम् ॥ ॐ यदेतन्मण्डलं तपतितन्महदु-
क्थन्ताऽऋचःसऽऋचांलोकोथयदेतदर्चिर्दीप्यतेतन्महाव्र-
तंतानिसामानिससाम्नांलोकोथयऽएषऽएतस्मिन्मण्डले पु-
रुषःसोग्निस्तानियजूंषिसयजुषांलोकः ॥ १ ॥ सैषात्रय्येव-
विद्यातपतितद्धैतदप्यविद्वांसऽआहुस्त्रयीवाऽएषा विद्या-
तपतीतिवाग्घैवतत्पश्यन्तीवदति ॥ २ ॥ सऽएषऽएव
मृत्युः । सऽएष एवमृत्युर्यऽएषऽएतस्मिन्मंडलेपुरुषोथैतदमृतं
यदेतदर्चिर्दीप्यतेतस्मान्मृत्युर्नम्रियतेमृतेह्यन्तस्तस्मादु न दृ-
श्यतेमृतेह्यन्तः ॥ ३ ॥ तदेषश्लोकोभवति । तदेषश्लोकोभव-
त्यन्तरम्मृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतंमृत्यावमृत-

माहितमित्येतस्मिन्हि पुरुषऽएतन्मण्डलं प्रतिष्ठितं तपति
मृत्युर्विवस्वन्तं वस्तऽइत्यसौवाऽआदित्योविवस्वानेषह्य-
होरात्रेविवस्तेतमेषवस्तेसर्वतोह्यनेन परिवृतोमृत्योरात्मा-
विवस्वतीत्येतस्मिन्हिमण्डलऽएतस्य पुरुषस्यात्मैतदेष
श्लोको भवति ॥ ४ ॥ तयोर्वाऽएतयोरुभयोरेतस्यचार्चिषऽ-
एतस्यचपुरुषस्यैतन्मण्डलं प्रतिष्ठातस्मान्महदुक्थम्पर-
स्मैनशꣳसेन्नेदेतां प्रतिष्ठांछिनदाऽइत्येताꣳहसप्रतिष्ठांछि-
न्तेसोमहदुक्थंपरस्मैशꣳसतितस्मादुक्थशꣳसंभूयिष्ठंपरिच-
क्षते प्रतिष्ठाच्छिन्नोहिभवतीत्यधिदैवतम् ॥ ५ ॥ अथाधि-
यज्ञम् । यदेतन्मण्डलंतपत्ययꣳसरुक्मोथयदेतदर्चिर्दीप्य-
तऽइदं तत्पुष्करपर्णमापोह्येताऽआपꣳपुष्करपर्णमथयऽएषऽ-
एतस्मिन्मण्डलेपुरुषोयमेवसयोयꣳहिरण्मयः पुरुषस्तदेत-
देवैतत्त्रयꣳसꣳस्कृत्येहोपधत्तेतद्यज्ञस्यैवानुसꣳस्थामूर्द्ध-
मुत्क्रामतितदेतमप्येतियऽएषतपति तस्मादग्निन्नाद्रियेतपरि-
हंतुममुत्रह्येषतदाभवतीत्यु ऽएवाधियज्ञम् ॥ ६ ॥ अथाध्या-
त्मम् । यदेतन्मण्डलंतपतियच्चैषरुक्मऽइदंतच्छुक्लमक्षंनथय-

दतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदंतत्कृष्णनक्षन्नथयऽए-
षऽएतस्मिन्मण्डले पुरुषोयश्चैषहिरण्मयःपुरुषोवमेवसयो-
यंदक्षिणेक्षन्पुरुषः ॥७॥ सऽएषऽएवलोकपृणतामेषसर्व्वोग्नि-
रभिसंपद्यतेतस्यैतंमिथुनंयोयᳫंसव्येक्षन्पुरुषोर्द्धमुहैतदा-
त्मनोयन्मिथुनंयदावैसहमिथुनेनाथसर्वोथकृत्स्नःकृत्स्नतायै-
तद्यत्ते द्वेभवतोद्वन्द्वᳫंहिमिथुनं प्रजननन्तस्माद्द्वेलोकंपृ-
णेऽ उपधायेतेतस्माद्द्वाभ्यांद्वाभ्यांचितिंप्रणयन्ति ॥ ८ ॥
सऽएषऽएवेन्द्रोयोयंदक्षिणेक्षन्पुरुषोथेयमिंद्राणीताभ्यदेवा
ऽएताविधृतिमकुर्वन्नासिकांतस्माज्जायायाऽअंतेनाश्नीयावी-
र्यवान्हास्माज्जायतेव्वीर्यवन्तमुहसाजयनयतियस्याऽअन्ते-
नाश्नाति ॥ ९ ॥ तदेतद्देवव्रतᳫंराजन्यबन्धवामनुष्याणां
मनुतमां गोपायंति तस्मात्तेषुवीर्यवाञ्जायतेमृतंवाकाशंव्व-
यसाᳫं साक्षिप्रश्येनंजनयति ॥ १० ॥ तौहृदयस्याकाशं
प्रत्यवेत्यमिथुनीभवतस्तौ यदामिथुनस्यान्तंगच्छतोथहैत-
त्पुरुषः स्वपितितद्यथाहैवेदंमानुषस्यमिथुनस्यान्तंगत्वास-
म्विदुऽइवभवत्येवᳫंहैवैतदसंविदुऽइवभवतिदैवᳫं ह्येतन्मि-

थुनंपरमोह्येषऽआनन्दः ॥ ११ ॥ तस्मादवंवित्स्वप्याल्लो-
क्यर्ठ॒हैतऽएवतद्दैवते मिथुनेनप्रियेणधाम्ना समर्द्धयतितस्मा-
दुहस्वपन्तंधुरेवनबोधयेन्नेदेतेदेवतेमिथुनीभवन्त्यौ हिन-
सानीतितस्मादुहैतत्सुषुपुषः श्लेष्माणमिवमुखंभवत्येतेऽएव-
तद्देवतेरेतः सिञ्चतस्तस्माद्रेतसऽइदठ॑सर्वᳪ सम्भवति यदि-
दंकिञ्च ॥ १२ ॥ सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डले-
पुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदयेपादावतिह-
तौतौहैतदाच्छिद्योत्क्रामति सयदोत्क्रामत्यथहैतत्पुरुषोम्रि-
यते तस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एषऽउऽ-
एवप्राणऽएषाहीमाः सर्वाः प्रजाः प्रणयतितस्यैतेप्राणाः
स्वाः सयदास्वपित्यथैनमेतेप्राणाः स्वाऽअपियन्ति
तत्स्वाप्ययः स्वाप्ययो हवैत ᳪ स्वप्नऽइत्याचक्षत परोक्षं
परोक्षकामाहि देवाः ॥ १४ ॥ सऽएतैः ॥ सऽएतैः सुप्ता-
नकस्यचनव्वदनमनसा संकल्पयति नव्वाचान्नस्यरसंविजा-
नातिनप्राणेनगंधं विजानातिनचक्षुषा पश्यतिन श्रोत्रेणशृ-
णोत्येतᳪह्येतेतदा पीताभवन्ति सऽएषऽएकः सन्प्रजासुब-

हुधाव्याविष्टस्तस्मादेकासतीलोकंपृणासर्वमग्निमनुविभव-
त्यथयदेकऽएवतस्मादेका ॥ १५ ॥ तदाहुरेकोमृत्युर्बहवऽ-
इत्येकश्चबहवश्चेतिब्रूयाद्यदहासावमुत्रतेनैकोथयदिहप्रजासु-
बहुधाव्याविष्टस्तेनोबहवः ॥ १६ ॥ तदाहुरन्तिकेमृत्युर्दूराऽ-
इत्यन्तिकेचदूरेचेतिहब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथ
यदसावमुत्र तेनोदूरे ॥ १७ ॥ तदेषश्लोकोभवति । तदेषश्लो-
कोभवत्यन्नेभात्यपश्रितोरसानाꣳ संक्षरेमृतऽइतियदेतन्म-
ण्डलंतपतितदन्नमथयऽएषऽएतस्मिन्मण्डलेपुरुषः सोत्ता-
सऽएतस्मिन्नन्नेपश्रितोभातीत्यधिदैवतम् ॥ १८ ॥ अथा-
ध्यात्मम् । अथाध्यात्ममिदमेवशरीरमन्नमथयोयंदक्षिणे-
क्षन्पुरुषः सोत्तासऽएतस्मिन्नन्नेपश्रितोभाति ॥ १९ ॥ तमे-
तमग्निरित्यध्वर्यवऽउपासते ॥ यजुरित्येषहीदꣳसर्वंयुनक्ति-
सामेतिच्छन्दोगाऽएतस्मिन्हीदꣳ सर्वꣳ समानमुक्थमि-
तिबह्वृचाऽएषहीदꣳ सर्वमुत्थापयति यातुरितियातुविदऽ-
एतेनहीदꣳसर्वंयतंविषमितिसर्पाःसर्पऽइतिसर्पविदऽऊर्गिति
देवारयिरितिमनुष्या मायेत्यसुराःस्वधेतिपितरोदेवजनऽ-

इति देवजनविदोरूपमितिगन्धर्वागन्धऽइत्यप्सरस्तंयथाय-
थौपासतेतदेवभवति तद्धैनान् भूत्वावति तस्मादेनमेवंवि-
त्सर्वैरेवैतैरुपासीतसर्वंᳫं हैतद्भवतिसर्वᳫंᳫंहैनमेतद्भूत्वावति ॥
॥ २० ॥ सऽएषत्रीष्टकोग्निऽऋगेकायजुरेकासामैकातद्यां
काञ्चात्रर्चोपदधाति रुक्मऽएवतस्याऽआयतनमथयांयजुषा
पुरुषऽएव तस्याऽआयतनमथयाᳫंसाम्ना पुष्करपर्णमेव
तस्याऽआयतनमेवत्रीष्टकᳫं ॥ २१ ॥ तेवाऽएतेऽउभेऽएषच-
रुक्मऽएतच्चपुष्करपर्णमेतंपुरुषमपीत उभेह्यृक्सामेयजुरपी-
तऽएवम्वेकेष्टकᳫं ॥ २२ ॥ सऽएषऽएवमृत्युः सऽएषऽएव-
मृत्युर्यऽएषऽएतस्मिन्मण्डलेपुरुषोयश्चायंदक्षिणेक्षन् पुरुषᳫं-
सऽएषऽएवं विदऽआत्माभवतिसयदैवम्विदस्माल्लोकात्प्रै-
त्यथैतमेवात्मानमभिसम्भवति सोमृतोभवतिमृत्युर्ह्यस्या-
त्मा भवति ॥ २३ ॥ इति मंडलब्राह्मणम् ॥ इत्युपस्थाय
प्रदक्षिणीकृत्य नमस्कृत्य प्रागग्रदर्भेषु उपविशेत् ॥ ततो दर्भ-
पाणिः स्वाध्यायं च यथाशक्ति इषेत्वोर्जेत्यादि पठेत् ॥ तत्र
तावत् ऋष्यादिन्या०॥ ॐ गौतमभरद्वाजाभ्यां नमः नेत्रयोः॥
ॐ विश्वामित्रजमदग्निभ्यां नमः श्रोत्रयोः ॥ ॐ वसिष्ठक-

श्यपाभ्यां नमः नासिकायाम् ॥ ॐ अत्रये नमः वाचि ॥ ॐ गायत्र्यग्निभ्यां नमः शिरसि ॥ ॐ उष्णिक्सवितृभ्यां नमः ग्रीवायाम् ॥ ॐ बृहतीबृहस्पतिभ्यां नमः हनौ ॥ ॐ बृहद्रथंतरद्यावापृथिवीभ्यां नमः बाह्वोः ॥ ॐ त्रिष्टुबिन्द्राभ्यां नमः नाभौ ॥ ॐ जगत्यादित्याभ्यां नमः श्रोण्योः ॥ ॐ अतिच्छंदः प्रजापतिभ्यां नमः लिङ्गे ॥ ॐ यज्ञायज्ञियवैश्वानराभ्यां नमः गुदे ॥ अनुष्टुब्विश्वेभ्यो देवेभ्यो नमः ऊर्वोः ॥ ॐ पंक्तिमरुद्भ्यो नमः जान्वोः ॥ ॐ द्विपदाविष्णुभ्यां नमः पादयोः ॥ ॐ विच्छंदोवायुभ्यां नमः नासापुटस्थप्राणेषु ॥ ॐ न्यूनाक्षराच्छंदोभ्यो नमः सर्वाङ्गेषु ॥ एवमेवाङ्गानि योजयित्वा वेदमयः संपद्यते । न कुतश्चिद्भयं विंदते । शापानुग्रहसामर्थ्यं ब्राह्मं तेजश्च वर्द्धते । स्वर्गलोकः परं साधनं धर्मार्थकाममोक्षस्य च । तस्य दारिद्र्यदुःखशोकरोगभयं न भवति । ततः ॐ भूर्भुवः स्वः ॐ तत्सवितुः० इत्युच्चार्य ॐ इषेत्वोर्ज्जेत्वांव्वायवं स्त्थदेवोवं÷ सविताप्प्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइंद्रायभागम्प्रजावंतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंꣳसोध्रुवाऽअस्मिन्गोपतौस्यात बह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यंदे-

वमृत्विजंम् ॥ होतांरंरत्नुधातंमम् ॥ २ ॥ ॐ अग्नऽआयां हिवीतयेंगृणानोहुव्यदांतये ॥ निहोतांसत्सिबर्हिषिं ॥ ३ ॥ ॐ शंनोंदेवीरुभिष्टंयुऽआपों भवन्तुऽपीतयें ॥ शँय्योरुभि-स्रंवन्तुनः ॥ ४ ॥ इति चतुर्वेदमंत्रान्पठित्वा सहस्रं शतं वा गायत्रीं जपेत् । अत्र योगियाज्ञवल्क्यः-'वेदाथर्वपुराणानि सेतिहासानि शक्तितः॥जपयज्ञार्थसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥' ततः ॐ यस्यस्मृत्या० इति पठेत् । अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पण-मस्तु ॥ इति ब्रह्मयज्ञप्रयोगः ॥ एवं ब्रह्मयज्ञं विधाय तर्पणं कुर्यात् ॥

अथ तर्पणप्रयोगः ॥ तत्रादौ आचम्य देशकालौ संकीर्त्य देवर्षिपितृतर्पणं करिष्ये इति संकल्प्य सव्येन प्राङ्मुखो उदङ्-मुखो वा देवान्ध्यात्वा सव्यकरान्वारब्धसेकुशदक्षिणकरेण तोयं गृहीत्वाऽक्षतांश्च देवतीर्थेन ॐकारपूर्वं ब्रह्मादिदेवांस्तर्पयेत् ॥ तत्र प्रयोगः । देवतर्पणम् ॥ यथा ॐ ब्रह्मा तृप्यताम् १ ॥ ॐवि-

---

१ मार्कण्डेयः-" जपे होमे तथा दाने स्वाध्याये पितृतर्पणे । अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥ " २ " ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत् । निवीती कायतीर्थेन मनुष्यान् सनकादिकान् ॥ " तीर्थान्याह याज्ञवल्क्यः-"कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥" देशिनी=तर्जनी एतदुक्तं भवति-कनिष्ठांगुलिमूले प्रजापतितीर्थम् । तर्जनीमूले पितृतीर्थम् । अंगुष्ठमूले ब्रह्मतीर्थम् । अंगुलीनामग्रे च देवतीर्थमिति ।

ष्णुस्तृप्यताम् १ ॥ ॐ रुद्रस्तृ० १ ॥ ॐ प्रजापतिस्तृ० १ ॥ ॐ देवास्तृप्यंताम् १ ॥ ॐ छन्दांसि तृप्यंताम् ॥ ॐ वेदास्तृ० १ ॥ ॐ ऋषयस्तृ० १ ॥ ॐ पुराणाचार्यास्तृ० १ ॥ ॐ गन्धर्वास्तृ० १ ॥ ॐ इतराचार्यास्तृ० १ ॥ ॐ संवत्सरः सावयवस्तृप्यताम् १ ॥ ॐ देव्यस्तृप्यंताम् १॥ ॐ अप्सरसस्तृ० १ ॥ ॐ देवानुगास्तृ० १ ॥ ॐ नागास्तृ० १ ॥ ॐ सागरास्तृ० १ ॐ पर्वतास्तृ० १ ॥ ॐ सरितस्तृ० १ ॥ ॐ मनुष्यास्तृ० १ ॥ ॐ यक्षास्तृ० १ ॥ ॐ रक्षांसि तृ० १॥ ॐ पिशाचास्तृ० १॥ ॐ सुपर्णास्तृ० १॥ ॐ भूतानि तृ० १ ॥ ॐ पशवस्तृ० १ ॥ ॐ वनस्पतयस्तृ० १ ॥ ॐ ओषधयस्तृ० १ ॥ ॐ भूतग्रामश्चतुर्विधस्तृ० १ ॥ एवमेव । ॐ मरीचिस्तृ० १ ॥ ॐ अत्रिस्तृ० १ ॥ ॐ अंगिरास्तृ० ॥ ॐ पुलस्त्यस्तृ० १ ॥ पुलहस्तृ० १ ॥ ॐ क्रतुस्तृ० १ ॥ ॐ प्रचेतास्तृ० १ ॥ ॐ वसिष्ठस्तृ० १ ॥ ॐ भृगुस्तृ० १ ॥ ॐ नारदस्तृ० १ ॥ ततो निवीती[1] उदङ्मुख उत्तराग्रेण[2] कुशेन प्रजापतितीर्थेन यवोदकेन

---

१ "ब्रह्मसूत्रेऽत्र सव्येंऽसे स्थिते यज्ञोपवीतिता । प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता ॥" २ "तर्पणे दर्भविचारः अग्निपुराणे--"प्रागग्रेषु सुरांस्तर्प्येन्मनुष्यांश्चैव मध्यतः । पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन् ॥" दक्षः—"प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् । उदङ्मनुष्यांस्तर्प्येत्तु पितॄन्—

च सनकादीन् प्रत्येकं द्विवारम् तर्पयेत् ॥ अथ दिव्यमनुष्यतर्पणम्—ॐ सनकस्तृप्यताम २ ॥ ॐ सनंदनस्तृ० २ ॥ ॐसनातनस्तृ० २ ॥ ॐ कपिलस्तृ० २ ॥ ॐ आसुरिस्तृ० २ ॥ ॐ वोढुस्तृ० ॥ ॐ पंचशिखस्तृ० २ ॥ ततोऽपसव्यं दक्षिणामुखः पितृतीर्थेन मोटकरूपकुशत्रयेण सतिलचंदनोदकेन कव्यवाडादीन् प्रत्येकं त्रिः ॥ अथ दिव्यपितृतर्पणम्—ॐ कव्यवाट्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ ॥ ॐ नलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा० ३ ॥ ॐ सोमस्तृप्यतामिदं तिलो० ३ ॥ यमस्तृप्यतामिदं० ३ ॥ ॐ अर्यमा तृप्यतामिदं० ३ ॥ ॐ अग्निष्वात्तास्तृप्यन्तामिदं तेभ्यः स्वधा नमः ३ ॥ ॐ सोमपास्तृप्यंतामिदं तिलोदकं तेभ्यः स्वधा नमः ३ ॥ ॐ बर्हिषदस्तृप्यंतामिदं तिलोदकं तेभ्यः स्वधा नमः ३ ॥ ततः यमतर्पणम्—ॐ यमाय नमः ॥ ॐ धर्मराजाय न० ३ ॥ ॐ मृत्यवे न० ३ ॥ ॐ अंतकाय न० ॥ ॐ वैवस्वताय न० ३ ॥ ॐ

---

—दक्षिणतस्तथा ॥ अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः । पितृंस्तु कुशमूलाग्रैर्विधिः कौशो यथाक्रमम् ॥ ” १ व्यासः—“ एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रिय एकैकमञ्जलिम् ॥ ” सांख्यायनः—
मातृमुख्यास्तु यास्तिस्रस्तासां त्रींस्त्रीन् जलाञ्जलीन् । सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली ॥ ”

कालाय० ३ ॥ ॐ सर्वभूतक्षयाय० ३ ॥ ॐ औदुंबराय० ३ ॥ ॐदध्नाय० ३॥ ॐनीलाय० ३॥ ॐपरमेष्ठिने० ३ ॥ ॐ वृकोदराय० ३ ॥ ॐचित्राय० ३ ॥ ॐ चित्रगुप्ताय० ३ ॥ इति चतुर्दश यमान् प्रत्येकं सतिलांजलित्रयेण तर्पयेत् ॥ मनुष्यपितृतर्पणम्—ॐआगच्छंतु मे पितर इमं गृह्णंत्वपोञ्ज-लिमिति पितॄनावाह्य ॥ ॐ उदीरतामवरऽउत्परासऽउन्मध्य-मा÷पितर÷सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥ ॐ अद्यामुकगोत्रोऽस्मत्पितामुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा इति मन्त्रेण वाक्येन च प्रथमांजलिं दद्यात् ॥ ॐ अंगिरसोनः पितरोनवग्वाऽअथ-र्वाणोभृगवः सोम्यासः÷॥ तेषां वयर्ठसुमतौ यज्ञियाना-मपि भद्रेसौमनसेस्याम ॥ इति मन्त्रेण वाक्येन च द्वितीयां-जलिं दद्यात् ॥ आयन्तुनः पितर÷सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुते-वन्त्वस्मान् । इति मंत्रेण वाक्येन च तृतीयांजलिं दद्यात् ॥

१ हारीतः—" आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् । शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥" विष्णुः—"स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः । नोपतिष्ठति तद् वारि पितॄणां तन्निरर्थकम् ॥" २ मरीचिः—" तिलानामप्यभावे-

ॐ ऊर्ज्जं वहन्तीरमृतंघृतम्पयः कीलालम्परिस्रुतम् ॥ स्वधास्थ तर्पयंतमेपितॄन् ॥ " ॐ अद्यामुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा" इति मन्त्रेण वाक्येन च पितामहाय प्रथमांजलिं दद्यात् ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरः शुन्धध्वम् । इति द्वितीयांजलिः ॥ ॐ येचेहपितरो येचनेहयांश्च विद्मयाँ २ ऽउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदः स्वधाभिर्यज्ञꣳसुकृतञ्जुषस्व ॥ इति तृतीयांजलिं दद्यात् । ॐ मधुवाताऽऋतायतेमधुक्षरंतिसिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ " ॐ अद्यामुकगोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा" इति मन्त्रेण वाक्येन च प्रपितामहाय प्रथमांजलिं दद्यात् ॥ ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः । मधुद्यौरस्तुनः पिता ॥ इति द्वितीयांजलिं दद्यात् ॥ ॐ मधुमान्नो वनस्पति-

---

-र्वा सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥ सप्तम्यां रविवारे च गृही जन्मदिने तथा । भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ "

मधुमाँ २ ऽ अस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः इति मंत्रेण वाक्येन च तृतीयांजलिं प्रपितामहाय दद्यात् ॥ ततः ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वम् । इति पित्रादिभ्योऽजलित्रयं द० ॥ ॐ अद्यामुकगोत्राऽस्मन्माता अमुकदेवी तृप्यतामिदं जलं सतिलं तस्यै स्वधा इति मातरं तर्पयेत् ॥ एवमेव पितामहीं प्रपितापहीं च तर्पयेत् ॥ एवं सापत्नमातरमपि । ततः ॐ नमोवः पितरोरसाय नमोवः पितरःशोषायनमोवः पितरो जीवाय नमोवः पितरःस्वधायै नमोवः पितरोघोराय नमोवः पितरोमन्यवे नमोवः पितरः पितरो नमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वः पितरो वासऽआधत्त इति मन्त्रं पठित्वा ॥ ॐ अद्यामुकगोत्रोऽस्मन्मातामहोऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा ॥ इति मातामहायांजलित्रयं दद्यात् ॥ एवं प्रमातामहाय वृद्धप्रमातामहाय च दद्यात् । तृप्यध्वम् । इति वारत्रयं तर्पयेत् ॥ ततः ॐ अद्यामुकगोत्राऽस्मन्मातामही अमुकदेवी तृप्यतामिदं जलं सतिलं तस्यै स्वधा ॥ इति मातामहीम् ॥ एवमेव प्रमातामहीं वृद्धप्रमातामहीं च तर्पयेत् ॥ ततः आचार्यं तत्पत्नीं भार्यां पुत्रं पितृव्यं तत्पत्नीं मातुलं तत्पत्नीं भ्रातरं तत्पत्नीं पितृष्वसारं मातृष्वसारं श्वशुरं श्वश्रूं पुत्रिकां भगिनीं पितृव्यपुत्रं भ्रातृपुत्रं मातुलपुत्रं श्यालकं गुरु-

पुत्रं जामातरं भ्रातरं पौत्रं भागिनेयं दौहित्रं मित्रं सुहृच्छिष्यांश्च तर्पयेत् ॥ ततः ॥ ॐ देवासुरास्तथा यक्षा नागा गंधर्वराक्षसाः ॥ पिशाचा गुह्यकाः सिद्धाः कूष्मांडास्तरवः खगाः ॥ ॥ १ ॥ जलेचरा भूनिलया वाय्वाधाराश्च जंतवः ॥ प्रीतिमेते प्रयांत्वाशु मद्दत्तेनांबुनाखिलाः ॥२॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥ तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ ३ ॥ ॐ ये बान्धवाऽबान्धवाश्च येऽन्यजन्मनि बान्धवाः ॥ ते तृप्तिमखिलां यांतु यश्चास्मत्तोऽभिवाञ्छति ॥ ॥ ४ ॥ ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥ तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ ५ ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ तृप्यंतु पितरः सर्वे मातृमातामहादयः ॥ ६ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ ७ ॥ इति मंत्रैः पृथक् पृथक् सतिलमुदकं द० ॥ ततः–ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ इति स्नानवस्त्रं भूमावेव न पादादौ न जलादौ निष्पीड-

---

१ योगियाज्ञवल्क्यः–" वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः । भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥ " वृद्धयोगी–" यावदेतान्पितॄंश्चैव पितृंश्चापि न तर्पयेत् । तावन्न पीडयेद्वस्त्रं येन स्नातो भवेन्नरः ॥ " स्मृत्यन्तरे–" वस्त्रं चतुर्गुणीकृत्य पीडयेच्च जलाद्बहिः । वामप्रकोष्ठे–

येत् । ततः सव्यमाचमनं च कृत्वा तर्पणोत्तरकर्म कुर्यात् । तत्र क्रमः ।

ॐ नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे ॥ जगत्सवित्रे शुचये नमस्ते कर्मदायिने ॥ १ ॥ इति मंत्रेण सूर्याय सतिलांजलिं दत्त्वा आचम्य ब्रह्मादीन् पुष्पैरर्चयेत् ॥ तत्र क्रमः ॥ ॐ ब्रह्मंजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसंतश्चव्विवः । ॐ ब्रह्मणे नमः ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरे ॥ ॐ विष्णवे नमः ॥ ॐ नमस्ते रुद्र मन्यवऽउतोतऽइषवे नमः ॥ बाहुभ्यामुततेनमः ॥ ॐ रुद्राय नमः ॥ ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतंमर्त्यंञ्च॥हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्॥ ॐ सूर्याय नमः ॥ ॐ मित्रस्यचर्षणीधृतोवोदेवस्य सानसि॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ॐ मित्राय नमः । ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके॥ ॐ वरुणाय नमः॥

---

—निक्षिप्य द्विराचम्य शुचिर्भवेत् ॥ एवंच वस्त्रं चतुर्धा कृत्वा भूमौ वामभागे निष्पीडयेत् । तर्पितजले पवित्रं विसृजेत् । यदि गृहे मृततिथौ सांवत्सरिकश्राद्धादि कर्म स्यात् तर्हि वस्त्रनिष्पीडनं न कुर्यादिति बोध्यम् ।" द्वादश्यां पञ्चदश्यां च संक्रान्तौ श्राद्धवासरे । वस्त्रं निष्पीडयेन्नैव नच क्षारेण योजयेत् ॥ "

इति ब्रह्मादीन्संपूज्योत्थाय । ॐ अद्दृश्रमस्यकेतवोविरश्मयो-
जनाँ २ ॥ ऽ अनु ॥ भ्राजंन्तोऽअग्नयो यथा ॥ उपयामगृहीतोसिसूर्य्यायत्वा भ्राजायैषते योनिःसूर्य्यायत्वा भ्राजायंसूर्य्य-
भ्राजिष्ठभ्राजिष्ठस्त्वंदेवेष्वसिभ्राजिष्ठोहम्मनुष्येषुभूयासम् ॥
हꣳसꣳशुचिषद्वसुरन्तरिक्षसद्धोतांवेदिषदतिथिर्दुरोणसत्
नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋत-
म्बृहत् ॥ २ ॥ इत्याभ्यां सूर्यमुपस्थाय प्रदक्षिणीकृत्य आदित्याय
नमः इत्यादित्यं नमस्कृत्य ॥ ॐ दिग्भ्यो नमः । ॐ दिग्देव-
ताभ्यो नमः । ॐ ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ
पृथिव्यै नमः । ॐ ओषधिभ्यो नमः । ॐ वाचे नमः । ॐ
वाचस्पतये नमः । ॐ विष्णवे नमः । ॐ महद्भ्यो नमः ।
ॐ अद्भ्यो नमः । ॐ अपांपतये नमः । ॐ वरुणाय नमः ॥
इति नमस्कृत्य उदकं च दत्त्वा ॥ ॐ संवर्चसापयसा संतनूभि-
रगन्महिमनसासꣳशिवेन ॥ त्वष्टासुदत्रोविदधातुरायोनु-
मार्ष्टुतन्वोयद्विलिष्टम् । इति जपन्करद्वयेन मुखं संमृश्य ॐ
देवागातुविदोगातुंवित्वागातुमित मनसस्पत ॥ इमन्देव-
यज्ञꣳस्वाहावातेधाः ॥ इति विसर्जयेत् ॥ एवंविधिना जीव-

त्पितृकेनापि ब्रह्मादिचित्रगुप्तपर्यंतं तर्पणं कृत्वा स्वपित्रादितर्पणं वस्त्रनिष्पीडनं च वर्जयित्वा ब्रह्मार्चनादिस्नानादिकर्मांगभूतदेवता-विसर्जनपर्यन्तं तर्पणविधिर्विधेयः ॥ इति तर्पणप्रयोगः ॥

अथ पंचदेवपूजाप्रयोगः ॥ तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं यथाशक्ति यथामिलितोपचारैः श्रीमहाविष्णुपूजां करिष्ये । पंचायतनपक्षे तु "श्रीरुद्रविनायकसूर्यशक्तिपरिवृतश्रीमहाविष्णुपूजां करिष्ये" इति संकल्प्य आसनादि विधाय घण्टानादं च कृत्वा शंखोदकेनात्मसहितं पूजा-सम्भारं प्रोक्ष्य पुरुषसूक्तेन न्यासं कुर्यात् ॥ ॐ सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः ॥ पुरुषोदेवताऽनुष्टुप्छन्दोऽन्त्यायास्त्रिष्टुप्छंदो न्यासे पूजायां च विनियोगः ॥ ततः ॐ सहस्रशीर्षेति वामकरे ॥ १ ॥ ॐ पुरुषऽएवेदꣳसर्व-

१ भक्तिः—"अक्षतैर्नार्चयेद् विष्णुं न तुलस्या विनायकम् । न दूर्वया यजेद् दुर्गां नोन्मत्तेन दिवाकरम् ॥" ज्ञानमालायाम्—"नाक्षतैरर्चयेद् विष्णुं न तुलस्या गणाधिपम् । न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम् ॥ उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधैः । फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत् ॥" स्मृत्यन्तरे—"नाक्षतैरर्चयेद् विष्णुं न केतक्या महेश्वरम् ।" अत्र अक्षतानां पूजने निषेधः नतु तिलके इति बोध्यम् । यद्वा अक्षता=अनुपहताः । अत एव "गन्धमाल्याक्षतस्रग्भिः" (भा० ११।३।५२) इति भागवतपद्येनाऽविरोधः ॥ "अक्षतास्तु यवाः प्रोक्ताः" इति पदार्थादर्शे उक्तत्वाद् यवानामेवायं प्रतिषेधो न तण्डुलानामिति तु व्रतराजे ॥

मिति दक्षिणकरे ॥२॥ ॐएतावानस्य महिमेति वामपादे॥३॥ ॐ त्रिपादूर्ध्व इति दक्षिणपादे ॥ ४ ॥ ॐ ततोविराडिति वामजानुनि ॥५॥ ॐ तस्माद्यज्ञात्सर्वहुतः सं० इति दक्षिणजानुनि ॥६॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः इति वामकटौ ॥ ७ ॥ ॐ तस्मादश्वा इति दक्षिणकटौ ॥ ८ ॥ ॐ तं यज्ञमिति नाभौ ॥९॥ ॐयत्पुरुषं व्यदधुरिति हृदि ॥ १० ॥ ॐ ब्राह्मणोस्यमुखमिति कंठे ॥११॥ ॐचंद्रमामनस इति वामबाहौ॥१२ ॐ नाभ्याऽआसीदिति दक्षिणबाहौ ॥ १३ ॥ ॐ यत्पुरुषेणेति मुखे ॥ १४ ॥ ॐ सप्तास्यासन्निति अक्ष्णोः ॥ १५॥ ॐ यज्ञेन यज्ञमिति मूर्ध्नि ॥ १६ ॥ अथ पंचांगन्यासः ॥ ॐ अद्भ्यः सम्भृतः–इति हृदये ॥ १ ॥ ॐ वेदाहमेतमिति शिरसि॥२॥ ॐ प्रजापतिश्चरति इति शिखायाम् ॥ ३ ॥ ॐ योदेवेभ्य आतपति इति कवचाय हुम् ॥ ४ ॥ ॐ रुचंब्राह्ममिति अस्त्राय फट् ॥ ५ ॥ इति स्वदेहे न्यासं कृत्वा एवमेव देवांगन्यासं कुर्यात् ॥ ततः ॥ कलशं शंखघण्टे च संपूज्य देवं ध्यायन् पूजां कुर्यात् ॥ तत्र प्रयोगः ॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिर्ठसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ ॐ श्रीमहाविष्णवे

नमः आवाहनं समर्पयामि। पंचायतनपक्षे "श्रीविष्णुरुद्रविनायकसूर्यशक्तिभ्यो नमः आवाहनं०" इति वाच्यम्। एवं सर्वत्र। इत्यावाहनं० ॥१॥ [ शालिग्रामबाणलिंगादावावाहनाभावान्मंत्रेण पुष्पं निवेदयेत्।] ॐ पुरुषऽएवेदर्ठं सर्व्वं य्यद्भूतं यच्च भाव्यम्॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ इत्यासनं० ॥२॥ ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ इति पाद्यं० ॥ ३ ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः॥ ततो विष्वङ् व्यक्रामत्साशनानशनेऽअभि॥ इत्यर्घ्यं० ॥ ४ ॥ ॐ ततो विराडजायत विराजोऽअधि पूरुषः॥ स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ इत्याचमनं० ॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्यम्॥ पशूँस्ताँश्चक्रे व्वायव्यानारण्या ग्राम्याश्च ये॥ इति स्नानं० ॥६॥ अत्र सम्भवे सति ॐ पयः पृथिव्यामित्यादि पृथक् पृथक्मन्त्रेण पंचामृतस्नानानि कारयित्वा पुरुषसूक्तेनाभिषेकः कार्यः॥ ॐ तस्माद्यज्ञात्सर्व्व-

---

१ "कुर्यादावाहनं मूर्तौ मृन्मय्यां सर्वदैव हि। प्रतिमायां जले वह्नौ नावाहनविसर्जने॥" इति वाचस्पत्ये।

हुतऽऋचः सामांनिजज्ञिरे ॥ छन्दाᳬसिजज्ञिरे तस्माद्यजु-
स्तस्मांदजायत ॥ इति वस्त्रं० (वस्त्रांते आचमनीयम्)॥७॥ ॐ
तस्मादश्वाऽअजायन्तयेकेचौभयादतः ॥ गावोंहजज्ञिरेत-
स्मात्तस्माज्जाताऽअंजावयः ॥ इति यज्ञोपवीतं० [ आचम-
नीयं ] ॥ ८ ॥ ॐ तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥
तेनंदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥ इति गन्धं० ॥ ९ ॥
ॐ यत्पुरुषंव्यदधुःकतिधाव्यंकल्पयन् ॥ मुखङ्किमस्यासी-
त्किम्बाहूकिमूरूपादाऽउच्येते ॥इति तुलसीपत्रपुष्पाणि०।१०।
ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरू तदस्य
यद्वैश्यःपद्भ्याᳬ शूद्रोऽअंजायत ॥ इति धूपं० ॥११॥ ॐ
चन्द्रमा मनसो जातश्चक्षोःसूर्योऽअजायत ॥ श्रोत्राद्वायुश्च
प्राणश्च मुखादग्निरजायत ॥ इति दीपं० ॥१२॥ ॐ नाभ्याऽ-
आसीदन्तरिक्षᳬशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्याम्भूमिर्दिशः
श्रोत्रात्तथालोका २ऽअंकल्पयन् ॥ इति नैवेद्यं० ॥ आचमनं
च० ॥ १३ ॥ ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसु-
न्तोस्यासीदाज्यंङ्ग्रीष्मऽइध्मःशरद्धविः ॥ इति नम-

स्कारं० ॥ १४ ॥ ततः कर्पूरेण नीराजनं कार्यम् ॥ ॐ सुप्ता-स्यासन्परिधयस्त्रिःसप्तसामधं÷कृताः ॥ देवायद्यज्ञन्तंन्वा-नाऽअबध्नन्पुरुषम्पशुम् ॥ इति प्रदक्षिणम् ॥ १५ ॥ ॐ यज्ञे-नंयज्ञमंयजन्तदेवास्तानिधर्माणिप्रथमान्यांसन् ॥ तेहना-कंमहिमानं÷सचन्तयत्रपूर्वेसाध्याःसन्ति देवाः ॥ इति पुष्पांजलि च दत्त्वा ॥ १६ ॥ ततः ॥ ॐ प्रपन्न पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ इति वदन्नमेत् ॥ ततो यथा-शक्ति गायत्रीं द्वादशाक्षरमंत्रं पंचाक्षरं वा जपित्वा महापुरुषवि-द्यास्तवेन स्तुत्वा कर्मेश्वरार्पणं च कृत्वा देवं प्रार्थयेत् । ॐ आवाहनं न जानामि न जानामि विसर्ज्जनम् ॥ पूजां चैव न जानामि क्षम्यतां परमेश्वर ॥ १ ॥ मन्त्रहीनं क्रिया-हीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ २ ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ तस्मात्कारुण्यभावेन क्षमस्व परमेश्वर ॥ ३ ॥ इति प्रार्थ्य शंखोदकं शिरसि अभ्युक्ष्य निर्माल्यं देवदत्तमंगुष्ठतर्ज-

---

१—"एका चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके । चतस्रः केशवे दद्याद्रुद्र-स्यार्धप्रदक्षिणा ॥" रुद्रप्रदक्षिणायां विशेष आग्नेये—"सव्यं व्रजन्नतो सव्यं प्रनालं नैव लङ्घयत् ॥" इति ॥

नीभ्यां गृहीत्वा शिरसि धारयेत् ॥ ततो विष्णुपादोदकं विप्रपादोदकं च पिबेत्।एवं देवं संपूज्य मातृपितृमुखान् गुरून् वृद्धांश्च प्रपूजयेत् ॥ इति पञ्चदेवपूजनप्रयोगः ॥

अथ विष्णुप्रीतिकरमार्तिक्यं लिख्यते ॥ वंदे गोपालं मृगमदशोभितभालं करुणाकल्लोलम् ॥ जय देव जय देव ॥ निर्गुणसगुणाकारं संहृतभूभारं, मुरहरनंदकुमारं मुनिजनसुखकारम् । वृंदावनसंचारं कौस्तुभमणिहारं, करुणापारावारं गोवर्धनधारम् ॥ जय देव जय देव० ॥ १ ॥ कुंचितकुन्तलनीलं शरदिन्दुवदनं, मणिगणमण्डितकुण्डलराजितश्रुतियुगलम् । विकसत्पंकजनयनंविलसद्भ्रूयुगलं, बिंबाधरमतिसुन्दरनासामणिलोलम् ॥ जय देव० ॥२॥ कंबुग्रीवं कौस्तुभमणिकण्ठाभरणं, श्रीवत्सांकितवक्षोलंबितवनमालम् । भूषितबाहुयुगलं करतलधृतवेणुं, त्रिवलीशोभितमध्यं धृतनवपद्मम् ॥ जयदेव० ॥ ३ ॥ मुरलीवादनलीलासप्तस्वरगीतं, जलचरस्थलचरवनचरराजितसंगीतम् । स्तंभितयमुनातोयं त्वघभित्तव चरितं, गोपीजनमनमोहन-

---

१ पूजनावसानमध्यात्मरामायणे श्रीरामः—" यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् । श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥" " तावन्मामर्चयेद्देवं प्रतिमादौ स्वकर्मभिः । यावत्सर्वेषु भूतेषु स्थितं चात्मनि न स्मरेत् ।"

कारं श्रीकान्तम् ॥ जयदेव० ॥ ४ ॥ रासक्रीडामण्डल-वेष्टितद्वयललनं, मध्ये तांडवसंभितकमलदलनयनम् । कुसुमाकारितरंजितमंदस्मितवदनं, कालियफणिवरदमनं यक्षेश्वरहननम् ॥ जयदेव० ॥ ५ ॥ किंकिणिमेखलमध्यं पीताम्बरवसनं, शोभितनूपुरगर्जितविलसत्पदयुगलम् । गोगोपीपरिवेष्टितयमुनातटसंस्थं, व्यासाभयदं सुखदं भुवनत्रयपालम् ॥ जयदेव जयदेव० ॥ ६ ॥ इति विष्णुनीराजनार्त्तिक्यं समाप्तम् ॥

अथ पंचायतनार्तिक्यम् । करुणापारावारं कलिमलपरिहारं, कद्रूसुतशयितारं करधृतकह्लारम् । घनपटलाभशरीरं कमलोद्भवपितरं, कलये विष्णुमुदारं कमलाभर्त्तारम् ॥जयदेव० जय केशव हर गजमुख सवितर्नगतनयेऽहं चरणौ तव कलये ॥ जय देव जय देव ॥१॥ भूधरजारतिलीलं मङ्गलकरशीलं, भुजगेशस्मृतिलोलं भुजगावलिमालम् । भूषाऽकृतिमतिविमलं संधृतगाङ्गजलं, भूयो नौमि कृपालं भूतेश्वरमतुलम् ॥ जय देव० ॥ २ ॥ विघ्नारण्यहुताशं विहितानयनाशं, विपदवनीधरकुलिशं विधृतांकुशपाशम् ॥ विजयार्कज्वलिताशं विदलितभवपाशं, विनतास्मो वयमनिशं विद्याविभवेशम् ॥ जय देव० ॥ ३ ॥ कश्यपसूनुमुदारं कालिंदीपितरं, कालत्रितयविहारं कार्मुक-

मंदारम् । कारुण्याब्धिमपारं कालानलमुदरं, कारणतत्त्वविचारं कामय ऊष्मकरम् ॥ जय दे० ॥ ४ ॥ निगमैर्नुतपदकमले निहतासुरजाले, हस्ते धृतकरवाले निर्जरजनपाले । नितरां कृष्णकृपाले निरवधिगुणलीले, निर्जरनुतपदकमले नित्योत्सवशीले ॥ जय देव जय देव जय केशव हर गजमुख सवितर्नगतनयेऽहं चरणौ तव कलये ॥ जय देव जय देव ॥ ५ ॥ इति पंचायतनार्तिक्यम् ॥

अथ महापुरुषविद्यास्तुतिः ॥ ॐ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ॥ १ ॥ नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे । ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानां दानवानां च सामान्यमसि दैवतम् । सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ ३ ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा । अध्यक्षश्चानुमंता च गुणमायासमावृतः ॥ ४ ॥ संसारसागरं घोरमनन्तं क्लेशभाजनम् । त्वामेव शरणं प्राप्य निस्तरंति मनीषिणः ॥ ५ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ॥ ६ ॥ नैव किंचित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् । नैव किंचिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥ ७ ॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् । योगिनां प-

रमां सिद्धिं परमं ते परं विदुः ॥ ८ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन्महाभये । त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ९ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरेऽपि गतौ चापि वर्तते मे महद्भयम् ॥१०॥ त्वत्पादकमलादन्यन्न मे जन्मांतरेष्वपि । निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ ११ ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् । जन्मांतरेऽपि मे देव मा भूदस्य परिक्षयः ॥ १२ ॥ दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम । यदि नाथं च विज्ञेयं तावतास्मि कृती सदा ॥ १३ ॥ अकामकलुषं चित्तं मम ते पादयोः स्थितम् । कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ १४ ॥ इति महापुरुषविद्यास्तुतिः समाप्ता ॥

अथ निरग्निकानां वाजसनेयिनां नित्यहोमप्रयोगः ब्राह्मणसर्वस्वे—तत्रादौ अग्न्यायतनात्पश्चिमतः प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य । ॐ तत्सत् अमुकगोत्रोऽ-

---

१ होमनिषेधो हरिहरभाष्ये—"क्षुत्तृट्क्रोधसमायुक्तो हीनमन्त्रो जुहोति यः । अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥ स्वल्पे रूक्षे सस्फुलिङ्गे वामावर्ते भयानके । ऊर्ध्वं काष्ठैश्च सम्पूर्णे फूत्कारवति पावके ॥ कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् । आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम् ॥ " इति ॥

मुकशर्माहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये नित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यहोमं करिष्ये । इति संकल्प्य । कुण्डे स्थण्डिले वा दर्भैः परिसमुह्य १, गोमयोदकेनोपलिप्य २, स्रुवेण त्रिरुल्लिख्य ३, अनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य ४, उदकेनाभ्युक्ष्य ५, एवं पंचभूसंस्कारान् कृत्वा आत्मदक्षिणे अग्निमुपस्थाप्य ज्वलत्कुशेन ॐ क्रव्यादमग्निमिति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छंदोऽग्निर्देवताऽग्निसंस्कारे विनियोगः । ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतुरिप्रवाहः । इहैवायमितरो जातवेदादेवेभ्यो हव्यं वहतु प्रजानन् ॥ १ ॥ इति मंत्रेण क्रव्यादांशं नैर्ऋत्यां परित्यज्य । अयन्ते योनिरिति प्रजापतिर्ऋषिरनुष्टुप्छंदोऽग्निर्देवताग्न्युपस्थापने विनियोगः । ॐ अयन्तेयोनिर्ऋत्वियोयतोजातो अरोचथाः ॥ तञ्जानन्नग्नआरोहाथानोवर्धयारयिम् ॥ १ ॥ इति मंत्रेणाग्निं कुण्डे संस्थाप्य ॥ परिस्तरणं कुर्यात् । तद्यथा पूर्वे । उदगग्रं कुशत्रयम् । ॐ अग्निमीळेपुरोहितं यज्ञस्यदेवमृत्विजम् ॥ होतारं रत्नधातमम् ॥ १ ॥ इति मंत्रेण दद्यात् । ततो दक्षिणे प्रागग्रं कुशपत्रत्रयम् ॐ इषेत्वोर्जेत्वावायवस्थदेवोवः सवितापार्पयतु श्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावं-

तीरनमीवाऽअयुक्ष्मा मावस्तेनऽईशतमाघशर्ठसोध्रुवाऽअ-
स्मिन् गोपतौस्यात बह्वीर्य्यजमानस्यपशून् पाहि ॥ २ ॥
इति मंत्रेण० ॥ ततः पश्चिमे उदगग्रं कुशपत्रत्रयम् ॥ ॐ अग्नऽ-
आयाहि वीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि
॥ ३ ॥ इति मंत्रेण दद्यात् ॥ उत्तरे प्रागग्रं कुशपत्रत्रयम् । ॐ
शन्नो देवीरभिष्टयऽआपोभवन्तुपीतये । शंय्योरभिस्रवन्तु
नः ॥ ४ ॥ इति मंत्रेण च दद्यात् ॥ एवं परिस्तरणं कृत्वा वेणु-
धमन्याऽग्निं प्रज्वाल्य ध्यायेत् ॥ अग्निध्यानम्—ॐ चत्वारिशृ-
ङ्गात्रयोऽअस्यपादाद्वे शीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाब-
द्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ २ ऽआविवेश ॥ १ ॥ ॐ
मुखं यः सर्वदेवानां हव्यभुक्कव्यभुक्तथा ॥ पितॄणां च नम-
स्तुभ्यं विष्णवे पावकात्मने ॥ २ ॥ इति ध्यात्वा "अग्ने शा-
ण्डिल्यगोत्र मेषध्वज प्राङ्मुख मम संमुखो भव" इति प्रार्थ्य ॥
ॐपावकाग्नये नम इति गंधादिभिः संपूज्य पर्युक्ष्य घृताक्तं हवि-

---

१ आपस्तम्बः—" न कुर्यादग्निधमनं कदाचिद् व्यजनादिना । मुखेनैव धमेदग्निं धमन्या वेणुजातया ॥" मनुः—" नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ नच पादौ प्रतापयेत् ॥ " कात्यायनः—" मुखेनैव धमेदग्निं मुखादेष व्यजायत । नाग्निं मुखेनेति च यल्लौकिकं योजयन्ति तत्" ॥

ष्यान्नं हस्तेन जुहुयात् ॥ तद्यथा ॐ भूः स्वाहा इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ २ ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ३ ॥ इति व्याहृत्याहुतित्रयं हुत्वा । ततः ॐ अग्नये स्वाहा इदमग्नये न मम ॥ १ ॥ ॐ धन्वन्तरये स्वाहा इदं धन्वन्तरये न मम ॥२॥ ॐ विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो न मम ॥३॥ ॐ प्रजापतये स्वाहा इदं प्रजा० न मम ॥४॥ ॐ अग्नये स्विष्टकृते स्वा० न मम ॥५॥ इति गौतमोक्ताग्न्यादिपञ्चाहुतीश्च हुत्वा शाकलमंत्रैः षडाहुतयः । तत्र मंत्राः—ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा ॥ इदमग्नये न मम ॥ १ ॥ ॐ मनुष्यकृतस्यैनसोऽवयजनमसिस्वाहा ॥ इदमग्नये न मम ॥ २ ॥ ॐ पितृकृतस्यैनसोऽवयजनमसिस्वाहा ॥ इदमग्नये न मम ॥३॥ ॐ आत्मकृतस्यैनसोऽवयजनमसिस्वाहा ॥ इदमग्नये न मम ॥ ४ ॥ ॐ एनसऽएनसोऽवयजनमसि स्वाहा ॥ इदमग्नये न मम ॥ ५ ॥ ॐ यच्चाहमेनोंविद्वाँश्च-

१ बृहस्पतिः—"सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्नतु हापयेत् ॥ पैठीनसिरपि—"अन्य एतानि कुर्युः"। यत्पुनः—" दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते" इति होमप्रतिषेधः, स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः" इति मिताक्षरायां श्रीविज्ञानेश्वरः ।

कारुषञ्चाविद्वाँस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा ॥ इदमग्नये न मम ॥ ६ ॥ इति होमं समाप्य अग्निं संपूज्य ॐ सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्ति सप्तयोनीरापृणस्वघृतेनस्वाहा ॥ इति प्रार्थयेत् ॥"अनेन होमेन श्रीपरमेश्वरः प्रीयतां न मम" ॐतत्सद्ब्रह्मार्पणमस्तु ॥ इति नित्यहोमप्रयोगः ॥

अथ वैश्वदेवबलिकर्म पारस्करगृह्यसूत्रे हरिहरभाष्ये च । तत्रादौ वैश्वदेवार्थं पाकं विधाय समुद्धृत्याभिघार्य्य पश्चादग्नेः प्राङ्मुख उपविश्य दक्षिणजान्ववाच्य देशकालौ संकीर्त्य "अमुकगोत्रोऽमुकशर्माहं मम गृहे पंचसूनाजनितसकलदोषपरिहारपूर्वकं नित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीवैश्वदेवाख्यं पंचमहायज्ञं करिष्ये" इति संकल्प्य ॥ मणिकोदकेनाग्निं पर्युक्ष्य इ-

---

१ "अनर्पयित्वा गोविन्दे यो भुङ्क्ते धर्मवर्जितः । शुनो विष्ठासमं चान्नं नीरं तु सुरया समम् ॥" इति पाद्मे ॥ पराशरः—"वैश्वदेवविहीना ये आतिथ्येन विवर्जिताः । सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति ते ॥ काष्ठभारसहस्रेण घृतकुम्भशतेन च । अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥" जननाशौचे मरणाशौचे च व्यवस्थामाह संवर्तः—'होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा । पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ॥" इति, "विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।" इति च ॥ २ मणिकोदकेनेति आहिताग्निविषयम् । अन्यत्र तु स्थूलबिन्दुरूपेण जलेनेत्यर्थः । "मणिकाः स्थूलबिन्दवः" इति कोषात् । "अभ्युक्षणं तदाहुर्वा स्थूलबिन्द्वभिषेचनम् ॥" इति ॥

स्त्वेन द्वादशपर्वपूरकमोदनमादाय। ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये०॥ ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यः० ॥ ॐ कश्यपाय स्वाहा इदं कश्यपाय। ॐ अनुमतये स्वाहा इदमनुमतये० ॥ इति देवयज्ञः॥ इति पंचाहुतीर्हुत्वा। ॐ विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो न मम॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इत्याहुतिद्वयं दद्यात्। ततो मणिकसमीपे प्राक्संस्थमुदक्संस्थं वा हुतशेषान्नेन बलित्रयं दद्यात्॥ तद्यथा-ॐ पर्जन्याय नम इदं पर्जन्याय॥ ॐ अद्भ्यो नमः इदमद्भ्यः॥ ॐ पृथिव्यै नमः इदं पृथिव्यै॥ इति दद्यात्। ततो द्वारशाखयोर्दक्षिणोत्तरयोर्यथाक्रमम्-ॐ धात्रे नमः इदं धात्रे। ॐ विधात्रे नम इदं विधात्रे॥ इति द्वौ बली दत्त्वा प्रतिदिशम्। ॐ वायवे नमः इत्यनेनैव चतसृषु दिक्षु चतुरो बलीन् दद्यात्॥

---

शतपथब्राह्मणे-"पञ्च एव महायज्ञाः तान्येव महासत्राणि। भूतयज्ञो (१) मनुष्ययज्ञः (२) पितृयज्ञो (३) देवयज्ञो (४) ब्रह्मयज्ञ (५) इति" मनुः- "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥" एतदुक्तं भवति-वेदादिसच्छास्त्राणामध्ययनमध्यापनं च ब्रह्मयज्ञः। श्राद्धं, पिण्डदानं तर्पणं च पितृयज्ञः। अग्निहोत्राद्यनुष्ठानं दैवयज्ञः। पशुपक्ष्यादिभ्यो भोजनजलदानं भूतयज्ञः। अतिथिसत्कारश्च मनुष्ययज्ञ इति॥ एते पञ्च महायज्ञा अहरहः कर्तव्याः। नित्यत्वात्। यत्पुनरेषां फलश्रवणं तदेतेषां पावनत्वख्यापनार्थं न काम्यत्वप्रतिपादनाय।

इदं वायवे इति त्यागः ॥४॥ ततो दिशां च । ॐ प्राच्यै दिशे नमः इदं प्राच्यै दिशे ॥ ॐ दक्षिणायै दिशे नमः इदं दक्षिणायै दिशे ॥ ॐ प्रतीच्यै दिशे नमः इदं प्रतीच्यै दिशे ॥ ॐ उदीच्यै दिशे नमः इदमुदीच्यै दिशे ॥ इत्यादिदिग्भ्यश्च बलीन्दद्यात् ॥ दत्तानां बलीनामंतराले ॐ ब्रह्मणे नमः इदं ब्रह्मणे ॥ ॐ अन्तरिक्षाय नमः इदमंतरिक्षाय ॥ ॐ सूर्याय नमः इदं सूर्याय ॥ इति प्राक्संस्थं बलित्रयं दद्यात् ॥ ततो ब्रह्मादीनां बलित्रयाणामुत्तरप्रदेशे ॐ विश्वेभ्यो देवेभ्यो नमः ॥ इदं विश्वेभ्यो देवेभ्यः ॥ ॐ विश्वेभ्यो भूतेभ्यो नमः इदं विश्वेभ्यो भूतेभ्यः ॥ इति द्वौ बली दद्यात् ॥ तयोरुत्तरे ॐ उषसे नमः इदमुषसे ॥ ॐ भूतानां पतये नमः इदं भूतानां पतये ॥ इति द्वौ बली दद्यात् ॥ इति भूतयज्ञः ॥ ततो ब्रह्मादीनां बलीनां दक्षिणप्रदेशे अपसव्येन दक्षिणामुखः ॐ पितृभ्यः स्वधा नमः इति मन्त्रेणैकं बलिं पात्राऽवशिष्टान्नेन दद्यात् ॥ इति पितृयज्ञः ॥ तत्पात्रं प्रक्षाल्य सव्येन निर्णेजनजलं ब्रह्मादिबलीनां वायव्ये निनयेत् । ॐ यक्ष्मैतत्ते निर्णेजनं नम

---

१ किं वैश्वदेवस्यान्नसंस्कारकत्वमुताहो पुरुषार्थत्वमिति पक्षद्वयमुप्यत्याप्य पुरुषार्थत्वमेवास्य युक्तमिति सिद्धान्तितं मिताक्षरायामिति तत्रैव कणेहत्यालोचनीयम् । पुरुषार्थत्व एव " महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः " इत्यादि मनुवचनं साधु सङ्गतं भवतीत्यास्तां विस्तरः ।

इत्यनेन मन्त्रेण इदं यक्ष्मणे० ॥ ततः काकादिबलीन् बहिर्दद्यात् । तद्यथा–ॐ ऐंद्रवारुणवायव्याः सौम्या वै नैर्ऋतास्तथा । वायसाः प्रतिगृह्णंतु भूमावन्नं मयार्पितम् ॥ इदं वायसेभ्यः ॥ १ ॥ ॐ श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ ॥ ताभ्यामन्नं प्रदास्यामि स्यातामेतावहिंसकौ ॥ इदं श्वभ्यां नमः ॥ २ ॥ ॐ देवा मनुष्याः पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसंघाः ॥ प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छंति मया प्रदत्तम् ॥ इदं देवादिभ्यो नमः ॥ ३ ॥ ॐ पिपीलिकाकीटपतंगकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः। तृप्त्यर्थमन्नं हि मया प्रदत्तं तेषामिदं ते मुदिता भवंतु ॥ इदं पिपीलिकादिभ्यो नमः ॥ ॥४॥ ॐ सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता ॥ गोग्रासं तु मया दत्तं सुरभिः प्रतिगृह्यताम् ॥ इदं गोभ्यो नमः। ततो हस्तौ पादौ प्रक्षाल्य आचम्य अतिथिप्राप्तौ पादप्रक्षालनपूर्वकं गन्धमाल्यादिभिरभ्यर्च्य अन्नं परिवेष्य "ॐ हंत तेऽन्नमिदं मनुष्याय" इति संकल्प्य तमाशयेत् ॥ तदभावे षोडशग्रासपरिमितं चतुर्ग्रासपरिमितं वा अन्नं पात्रे कृत्वा निवीती भूत्वोदङ्मुख उपविष्टो ॐ हंत तेऽन्नमिदं मनुष्यायेति संकल्प्य कस्मैचिद्ब्राह्मणाय दद्यात् मनुष्ययज्ञसिद्धये ॥ "अकृते वैश्वदेवे तु

भिक्षौ तु गृहमागते ॥ उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥" ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ "अनेन वैश्वदेवाख्येन कर्मणा श्रीपरमेश्वरः प्रीयताम् ॥" ततो बलिदानानंतरम् ॐ ऋचंवाचमित्यध्यायेन शान्तिं कुर्यात् ॥ इति वैश्वदेवबलिकर्मप्रयोगः ॥

---

१ "कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥ पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति ।" ऋग्वेदे—"केवलाघो भवति केवलादी" । **याज्ञवल्क्यः**—"न पचेदन्नमात्मने" **मनुः**—"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते ।" भगवान् **श्रीकृष्णः**—"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥" अत्रात्मनः कैवल्यं विवक्षितम् । तेन देवादीनामात्मनश्च कृते पाको न दोषाय । यदाह **मनुः**—"देवतातिथिभृत्यानां पितॄणामात्मनश्च यः । न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥" अन्नहोमप्रभृति श्वादिभ्योऽन्नप्रक्षेपपर्यन्तं वैश्वदेवाख्यं कर्म सायं प्रातः कर्तव्यम् । तस्य प्रातरुपक्रमः सायमपवर्गः । यदाह **लौगाक्षिः**—"दिवाचरेभ्यो भूतेभ्य इति दिवा । नक्तंचरेभ्यो भूतेभ्य इति नक्तम् ।" कर्तॄणां पुंसामलाभे पत्नी वैश्वदेवं मन्त्ररहितं कुर्यात् ॥ यदाह भगवान् **मनुः**—"सायमन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥" अत्र बलिग्रहणं वैश्वदेवोपलक्षणार्थम् । तथा च **गौतमः**—"सायं प्रातर्वैश्वदेवः कतव्यो बलिकर्म च । अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥" **अङ्गिराः**—"शालाग्नौ विपचेदन्नं लौकिके वाऽपि नित्यशः । यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते ॥" **अत्रिः**—"लौकिके वैदिके वाऽपि हुतोत्सृष्टे जले क्षितौ । वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये ॥" इति ॥

( मण्डलम् ) भूमौ चतुरस्रंवितस्तिमात्रं जलेन मण्डलं कृत्वा तदुपरि बलीन्दद्यात् ।

पूर्व.

उत्तर. वैश्वदेवमंडलम्.

ॐ विधात्रे नमः इद वि० २ ( निवीती ) ॐ प्राच्यै दिश इद. ७ ( भूतयज्ञः ) ॐ धात्रे नमः इदं धात्रे १

ॐ वायवे नमः इदं वाय० ३

ॐ हंत तेन्नमिदं मनुष्याय २०

ॐ सनकादिमनुष्येभ्यो नमः इदं २१

ॐ उदीच्यै दिशे इदं० १० ॐ भूतानांपत—ॐ सूर्याय० इदं० १३

ॐ अवाच्यै दिशे इदं अ० ८

ॐ वायवे० इदं० ४

ॐ वायवे नमः—ये नमः इदं० १७ ॐ विश्वेभ्यो भूतेभ्यो

ॐ अंतरिक्षाय० इदं० १२

इदं वा० ६ ॐ उषसे न० इ० नमः इदं १५

ॐ ब्रह्मणे० इदं पितृयज्ञः ( अपसव्यं )

( सव्यं ) १६ ॐ विश्वेभ्यो देवेभ्यो ११

ॐ पितृभ्यः स्वधा नमः इदं० १८

ॐ यक्ष्मैतत्ते निर्णेजनं नमः इदं० १४

नमः इदं यक्ष्मणे ॐ वायवे नमः इदं० वा० ५

१९ ॐ प्रतीच्यै दिशे० इदं० ९

दक्षिण. वैश्वदेवमंडलम्.

मणिक ॐपृथिव्यै नमः इदं ३

ॐ अद्भ्यो नमः इदं २

ॐपर्जन्याय नमः इदं १

( बहिः काकादिभ्यो बलिदानम्. ) पश्चिम.

ततो नित्यश्राद्धम् कुर्यात् । तत्र प्रयोगः ॥ आचम्य प्राङ्मुख उपविश्य पुंडरीकाक्षं श्रीवासुदेवं च संस्मृत्य पुंडरीकाक्षः पुनातु इति कुशत्रयजलेन श्राद्धीयद्रव्याण्यात्मानं च सिंचेत् ॥ ततः कुशतिलजलमादाय "ॐ अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकशर्मणां सपत्नीकानां तथा अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां नित्यश्राद्धमहं करिष्य" इति प्रतिज्ञाय गायत्रीं देवताभ्यः इति त्रिर्जपित्वा प्राचीनावीती दक्षिणामुखः सव्यं जान्ववाच्य द्विगुणभुग्नकुशत्रयादीन्यादाय "ॐ अद्यामुकगोत्रास्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः नित्यश्राद्धे इदमासनं त्रेधा विभज्य युष्मभ्यं स्वधा" इति तिलजलप्रोक्षितं द्विगुणभुग्नकुशरूपमासनं दक्षिणाग्रं पित्रादिभ्यो दद्यात् ॥ एवमेव मातामहादिभ्योऽप्यासनमुत्सृजेत् ॥ ॐ अपहताऽअसुरारक्षाᳫँसिवेदिषदः ॥ इति श्राद्धदेशे तिलान् विकीर्य ॥ ततः गंधादि धृत्वा "ॐ अद्यामुकगोत्रास्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः सपत्नीका नित्यश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलानि युष्मभ्यं स्वधा" इति यथासंभवं पित्रादिभ्यो गधादि दद्यात् ॥ एवमेव मातामहादिभ्योऽप्युत्सृजेत् ॥ ततो जलेन मंडलं चतुष्कोणमन्नपात्रस्य चतुर्दिशं कृत्वाऽन्नपरिवेषणं कुर्यात् ॥ ततो मधु दत्त्वा ॐ मधुव्वाता इति पठित्वा ॥ ॐ मधु मधु मधु इत्यभिमंत्रयेत ॥ ततोऽन्नपात्रं प्र-

स्ताभ्यामधोमुखाभ्यां पाणिभ्यां स्पृशन् ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते अमृतं जुहोमि स्वधा॥ ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाᳫं सुरे इति जपित्वा वामहस्तेनान्नपात्रमत्यजन् ॐ विष्णो कव्यमिदं रक्ष मदीयमिति पठित्वा ॐ इदमन्नम् ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं हविरित्यन्नजलघृतेषु पुनरन्ने च दक्षिणांगुष्ठं निवेश्य ॐ अपहता असुरा रक्षाᳫंसि वेदिषदः। इत्यन्नपात्रपरितः तिलान्प्रक्षिप्य द्विगुणभुग्नकुशत्रयादीन्यादाय "ॐ अद्यामुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः सपत्नीका नित्यश्राद्धे इदमन्नं सोपस्करं युष्मभ्यं स्वधा" इति पित्रादिभ्योऽन्नमुत्सृजेत्॥ एवं मातामहादिभ्योऽप्यन्नमुत्सृजेत् ॥ ततः–

अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्। तत्सर्वमच्छिद्रमस्तु पित्रादीनां प्रसादतः॥ इति जपेत्। ततो गायत्रीं, मधुव्वाता इत्यादि त्र्यृचम् ॐ मधुमधुमधु इति जपेत्। ततः कृणुष्वपाज इत्यादिरक्षोघ्नान्मंत्रान्पठित्वा तिलान्भूमौ क्षिप्त्वा ॐ उदीरतामित्यादिपितृमंत्रान् ॐ सहस्रशीर्षेत्यादिपुरुषसूक्तम् ॐ आशुःशिशान इत्यादिकमप्रतिरथम् अन्यानि पवित्राणि च यथाशक्ति जपेत्॥ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः॥ इति पठेत्॥ ततः "ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुक-

शर्मणां सपत्नीकानां तथा अमुकगोत्राणां मातामहप्रमातामहवृ-द्धप्रमातामहानाम् अमुकामुकशर्मणां सपत्नीकानां कृतैतान्नित्यश्रा-द्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात् असंभवे फलमूलादिकं द-द्यात् ॥ ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिः पठेत् ॐ प्र-मादादिति पठित्वा विष्णुं स्मरेत् ॥ नित्यश्राद्धीयमन्नं ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् ॥ इति नित्यश्राद्धप्रयोगः ॥

ततो गोग्रासं दद्यात् ॥ तत्र मंत्रः ॐ सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ॥ प्रतिगृह्णंतु मे ग्रासं गावस्त्रैलोक्य-मातरः ॥ इति मंत्रेण गोग्रासं तृणजलयुतं दद्यात् ॥ तता यथार्हं भिक्षुकादिभ्योऽन्नं संविभंज्य बालज्येष्ठाश्च गृह्या यथायोग्यमश्नीयुः॥ ततो जायापती अश्नीतांम् पूर्वो वा गृहपतिः पत्नीतः ॥ अति-थ्यादीनाशयित्वाऽश्नीयादिति ॥

---

१ व्यासः—"विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसं भुक्तशेषंतु यज्ञशिष्टं तथाऽमृतम् ॥" देवलः—"उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः । प्राङ्मुखोऽन्नं तु भुञ्जीत शुचिः पीठमधिष्ठितः ॥ मनुः—" आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्वी दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋणं भुङ्क्ते उदङ्मुखः। पुत्रवांस्तु गृहे नित्यं नाश्नीयादुत्तरामुखः । सोमवारे तथाऽभ्यङ्गं वर्जयेत्तु सदा बुधः॥" प्रयोगपारिजाते—" पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः। तयोस्तु जीवतोरेकस्तथैव नियमः स्मृतः ॥ अनिशं मातृहीनानां यशस्यं दक्षिणामुखम् ॥"
२ याज्ञवल्क्यः—" बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः । संभोज्या—

अथ भोजनविधिः ॥ सुप्रक्षालितपाणिपादो धृतोत्तरीयवस्त्रो भोजनशालामागत्य आचम्य शुचौ संवृते देशे प्राङ्मुख प्रत्यङ्-मुखो वा उपविश्य भूमिं प्रोक्ष्य चतुरस्रं मंडलं कृत्वा तदुपरि प्रक्षालितं सुवर्णादिविहितपात्रं निधाय पंचयज्ञावशिष्टं घृतादियुतमन्नमुपसंगृह्य परिवेषणं कृत्वा ॐ भूर्भुवः स्वः तत्सवितुरिति गायत्रीमन्त्रेणा-न्नमभ्युक्ष्य ॐ पितुन्नुस्तोषम्महो धर्म्माणन्तविषीम् ॥ यस्य त्रितो व्व्योजसावृत्रंव्विपर्वमर्द्दयत् ॥ १ ॥ इत्यन्नं स्तुत्वा ॐ मानस्तोके तनये मानऽआयुषि मानोगोषु मानोऽअ-श्वेषुरीरिषः ॥ मानो व्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥१॥ ॐ नमोवः किरिकेभ्यो देवानाᳬं-हृदयेभ्यो नमोव्विचिन्वत्केभ्यो नमोव्विक्षिणत्केभ्यो न-मऽआनिर्हतेभ्यः ॥ २ ॥ ॐ नमः शंभवाय च मयोभवाय च नमः शकराय च मयस्कराय च नमः शिवाय च शिव-तराय च ॥ ३ ॥ इत्यभिमन्त्र्य ॥ सत्यन्त्वर्तेन परिषि-

—तिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥" स्ववासिनी=परिणीता पितृगृहे स्थिता स्ववासिनी । मनुः—"अदत्त्वा तु एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥" श्वभिर्गृध्रैश्चात्मानं भक्ष्यमाणं न जानातीत्यर्थः । ततश्च बालप्रभृतिभिः सह भोजनं न प्रत्यवायायेति बोध्यम् । रात्रौ भोजने दीप-विचारो ग्रन्थान्तरे—" नृणां भोजनकाले तु यदि दीपो विनश्यति । तदन्नं पाणिना स्पृष्ट्वा सावित्रीं मनसा स्मरेत् ॥ पुनर्दीपं ततो लब्ध्वा शेषं भुञ्जीत क्रमतः । अन्यदन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ " इति ॥

श्नामि इति मन्त्रेण प्रातः अन्नप्रोक्षणम् ॥ तद्वत् ॥ ऋतंत्वास-त्येन पारपिश्नामि इति मन्त्रेण सायमन्नप्रोक्षणम् ॥ ॐ तेजो-सिशुक्रमस्यमृतमसिधामनामासि प्रियं देवानामनाधृष्ट-न्देवयजनमसि इत्यभिमृश्य ॐ अग्निरस्मि जन्मनाजात-वेदा घृतम्मेचक्षुरमृतं मऽआसन् ॥ अर्कस्त्रिधातूरजसोवि-मानोजस्नोघर्मोहविरस्मि नाम ॥१॥ इत्यात्मानमग्निं ध्यात्वा ॥ पात्राद्दक्षिण भूमौ ॐ भूपतये स्वाहा नमः ॥ ॐ भुवनपतये स्वाहा नमः ॥ ॐ भूतानां पतये स्वाहा नमः ॥ इति बलि-त्रयं दत्त्वा ॥ ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमं पदम् ॥१॥ ॐ अमृतोपस्तरणमसि स्वाहा इत्याचम्य अन्न-ममृतं ध्यायन्मौनी हस्तचापल्यादिरहितो मुखे सर्वांगुलीभिः पंच-प्राणाहुतीर्जुहोति ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा इवि । ततो मौनेन यथासुखं भुंजीत ॥ एवं यथारुचि

---

१ हारीतः—"उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥ अङ्गिराः—" सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने । पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः । गुरूणां सन्निधौ दाने योगे चैव विशेषतः । एतेषु मौनमातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥" २ विष्णुपुराणे—" अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा ॥ प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥" गीतासु—

भुक्त्वा भुक्तशेषमन्नमादाय ॥ मद्भुक्तोच्छिष्टशेषं ये भुञ्जत पितरोऽधमाः ॥ तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु ॥ १ ॥ इति पितृतीर्थेन दक्षिणतो दत्त्वा अमृतापिधानमसि स्वाहा ॥ इति हस्ते गृहीतानामपामर्द्धं पीत्वाऽर्द्धं भूमौ निक्षिप्य तस्माद्देशादपसृत्य गण्डूषशलाकादिना तर्जनीवर्जमास्यं संशोधयेत् ॥ इति भोजनविधिः ॥

अथ भोजनोत्तरकर्म ॥ ततो भोजनान्ते शुद्धजलैः पाणिमुखं संशोध्य षोडश गंडूषान् कृत्वा दंतान् संशोध्य हस्तौ पादौ

---

–भगवान् **श्रीकृष्णः**–" आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ यातयामं गतरसं पूति पर्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ " सात्त्विकाहारेण मनुष्यवृत्तिरपि क्रमशः सात्त्विकी भवति, " आहारशुद्धौ सत्त्वशुद्धिः " ( छा० ७ । २६ । २ । ) इति **छान्दोग्यश्रुतेः** । १ इदं त्वत्रावधेयम्–" शरीरमाद्यं खलु धर्मसाधनम् " ' स्वास्थ्यं हि सर्वस्य सुखस्य हेतुः " इति तत्रतत्र शास्त्रकृतां भणितिः । स्वस्थश्चोक्तो **भावप्रकाशे**–समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ " तद्रक्षणविधिश्चेत्थमुपदिष्टो **वैद्यके**–" दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम् । आचरन् पुरुषः स्वस्थस्तदा तिष्ठति नान्यथा ॥ " अनारोग्यकारणं चोक्तं **माधवनिदाने**–"सर्वेषामेव रोगाणां निदानं कुपिता मलाः । तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ " तत्र चापि प्राधान्यमाश्रित्य प्रोक्तम्–" अत्यम्बुपानाद्विषमाशनाच्च सन्धारणान्मूत्रपुरीषयोश्च । दिवाशयाज्जागरणाच्च रात्रौ–

प्रक्षाल्य भोजनपात्रप्रक्षालनं तद्देशमार्जन कारयित्वा शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न नश्यति ॥ १ ॥ इत्यक्ष्णोर्निषिंचेत् ॥ ततः शतपदानि गत्वा स्वासने उपविश्य ॥ ॐ अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषम् ॥ सुखं ममैतत्परिणामसंभवं यच्छत्वरोगं मम चास्तु देहे ॥ १ ॥ आतापा भक्षितो येन वातापी च निपातितः ॥ समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥ २ ॥ इत्युदरं परिमृज्य तांबूलं निर्माल्य तुलसीपत्रं च भक्षयेत् ॥ अनंतरकृत्यमाह अत्रिः—इतिहासपुराणानि धर्मशास्त्राणि चाभ्यसेत् ॥ वृथा विवादवाक्यानि परीवादांश्च वर्जयेत् ॥ १ ॥ दिवा स्वापं न कुर्वीत स्त्रियं चैव विवर्जयेत् ॥ आयुर्हन्ति दिवा निद्रा दिवा स्त्री

---

—षड्भिः प्रकारैः प्रविशन्ति रोगाः॥" भोजनसमये भक्ष्यवस्तूनां मध्ये सदा लघुपाकवस्तूनि भुञ्जीत । विपरीतभोजने तु व्याध्यादिभाजनं भवति । यथोक्तं सुश्रुते—"व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति । विरुद्धरसवीर्यादीन् भुञ्जानोऽनात्मवान्नरः ॥" तस्माद् यद् भुक्तं सम्यक् परिपाकमियात्तदेव स्वबलानुसारेण भोक्तव्यम् । यथोक्तं शतपथब्राह्मणे—"यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद् भूयो हिनस्ति तत्, यत् कनीयो न तदवति ॥" सुश्रुतेऽपि—"हीनमात्रमसन्तोषं करोति च बलक्षयम् । आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥" १ भुक्त्वाङ्गुलितलं घृष्ट्वा नेत्रयोर्यत्प्रदीयते । अचिरेणैव तद् वारि तिमिराणि व्यपोहति ॥ " इति स्मृत्यन्तरम् ।

पुण्यनाशिनी ॥ २ ॥ ततः सायंसन्ध्यामुपास्य सूर्याग्नी नमस्कृत्य दीपकस्थापनं कुर्यात् ॥ दीपकालमाह—रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् ॥ यस्य तिष्ठद्गृहे दीपस्तस्य नास्ति दरिद्रता ॥ १ ॥ आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः ॥ प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥ २ ॥ इति भोजनोत्तरकर्म ॥

अथ शयनविधिः ॥ आचारादर्शे विष्णुपुराणे—"कृतपादादिशौचस्तु भक्त्या सायं ततो गृही ॥ गच्छेदस्फुटितां शय्यामपि दारुमयीं दृढाम् ॥ १ ॥ न विशालां न वा भग्नां न क्षामां मलिनां न च ॥ न च जन्तुमयीं शय्यां त्वधितिष्ठेदनास्तृताम् ॥ २ ॥ प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृपः ॥ सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ ३ ॥ " मात्स्ये—"मांगल्यं पूर्णकुंभं च शिरःस्थाने निधापयेत् ॥ रात्रिसूक्तं जपेद्रात्रौ रात्रिक्षामो भवे-

---

१ पुरुषस्य दीपनिर्वाणे दोष आह्निकसूत्रावल्याम्—"दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात् स्त्रियः । अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवम् ॥" इति ॥
२ दक्षः—"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥" विष्णुः—"नाऽऽर्द्रपादः स्वप्यात् ।" उशना—"न तैलाभ्यक्तशिराः स्वपेत् । नादीक्षितः कृष्णचर्मणि ।" कृष्णोऽत्र हरिणः इति याज्ञवल्क्यव्याख्यायामपरार्काभिधायाम् अपरादित्यदेवः ।

न्नरः ॥४॥" स्कांदे–"उपानहौ वेणुदंडमंबुपात्रं तथैव च ॥ तांबूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥ ५ ॥" तत्र प्रयोगः ॥ तावच्छर्वरीप्रथमभागं ग्रंथाद्यवलोकनेन नीत्वा स्वापकाले विष्णुं नमस्कृत्य ॐ नमो नंदीश्वराय इति पठित्वा सुखशायिनां स्मरणं कुर्यात् ॥ ॐअगस्तिर्माधवश्चैव मुचकुंदो महाबलः । कपिलो मुनिरास्तीकः पंचैते सुखशायिनः ॥१॥ अथ गारुडमंत्राः ॥ ॐ नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ॥ नमोस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ १ ॥ सर्पापसर्प भद्रं ते दूरं गच्छ महाविष ॥ जनमेजयस्य यज्ञांते आस्तीकवचनं स्मर ॥ २ ॥ आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते ॥ शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ ३ ॥ यो जरत्कारुणा जातो जरत्कन्या महायशाः ॥ तस्य सर्पोऽपि भद्रं ते दूरं गच्छ महाविष ॥ ४ ॥ एतान् गारुडमंत्रांस्तु निशायां पठते यदि ॥ मुच्यते सर्वबाधाभ्यो नात्र कार्या विचारणा ॥ ५ ॥ एवं पठित्वा समाधिस्थमव्ययं विष्णुं नमस्कृत्य रात्रौ स्वप्यात् ॥ इति शयनविधिः ॥

अथ दारोपगमः ॥ ऋतुदर्शनमारभ्य षोडशदिवसेष्वाद्यदिनचतुष्टयमेकादशं त्रयोदशं विहायावशिष्टेषु दिवसेषु पुत्रार्थी युग्म-

१ मनुः–"युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥ अमावस्यामष्टमीं च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी–

दिवसे कन्यार्थ्ययुग्मदिने चतुर्थीषष्ठयष्टमीचतुर्दशीपंचदशीश्राद्धपूर्वदिन व्रतोपवासश्राद्धनिमन्त्रिततद्भुक्तशनि रविभौमवारभरणीकृत्तिकार्द्रामघापूर्वात्रयविशाखाज्येष्ठामूलजन्मनक्षत्रसङ्क्रान्तिव्यतीपातवैधृतिरिक्ते शय्यान्तरे उपवीती मन्मथगृहं स्पृष्ट्वा ईश्वरं स्मृत्वोरेत्योत्थाय स्नायात् ॥ इति दारोपगमप्रयोगः ॥

एवं यथायोगं शुद्धः सन्स्वशय्यायां यथासुखं प्रबोधपर्यंतं सुप्त्वा पुनः प्रभाते उत्थाय प्रातःस्मरणादीनि कर्माणि प्रतिदिनं कुर्यात् ॥

---

-मवेन्नित्यमप्यृतौ स्नातको द्विजः ॥" ऋतोराद्याश्चतस्रो रात्रीर्वर्जयेत् । तथा च **मनुः**-"तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा । त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः॥" एकादशीत्रयोदश्यावृतोर्न पक्षस्य । अत्र **शङ्खलिखितौ**-"न दिवा मैथुनं व्रजेत् क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च । तस्मादेतत्परिवर्जयेत् ॥" इति । इत्यादि सकलमभिप्रेत्याह-**ऋतुदर्शनेत्यादि** ॥

१ **पराशरः**-"सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् । वैश्वदेवाऽऽतिथेयश्च षट्कर्माणि दिने दिने ॥" **विज्ञानेश्वरः**-"अन्तर्मुखानि यदि खानि तपस्ततः किं नान्तर्मुखानि यदि खानि तपस्ततः किम् ॥" अन्तर्बहिर्यदि हरिश्च तपस्ततः किं नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥" **मनुः**-यमान् सेवेत सततं न नित्यं नियमान् बुधः । यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥" नियमापेक्षया यमानुष्ठानगौरवज्ञापनार्थमिदं न तु नियमनिषेधार्थम् । यमनियमविवेकश्च मुनिभिरेवं कृतः । तत्र **याज्ञवल्क्यः**-"ब्रह्मचर्यं दया क्षांतिर्ध्यानं सत्यमकल्कता । अहिंसास्तेयमाधुर्ये दमश्चेति यमाः स्मृताः । स्नानं मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहाः । नियमो गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥" **स्मृत्यन्तरे**-"अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता । अस्तेयमिति पञ्चैते यमा-

एषामकरणे दोषो मार्कण्डेयपुराणे—" यस्य चानुदिनं हानिर्गृहे नित्यस्य कर्मणः ॥ यश्च ब्राह्मणसंत्यक्तः किल्बिषी स नराधमः ॥ १ ॥ नित्यस्य कर्मणो हानिं न कुर्वीत कदाचन ॥ तस्य त्वकरणे बन्धः केवलं मृतजन्मसु ॥ २ ॥" स्मृत्यर्थसारे—" नास्तिक्यात्कर्महानौ तु मासेन पतितः स्मृतः । द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा ॥१॥" कूर्मपुराणे—"इत्येतदखिलं प्रोक्तमहन्यहनि वै मया । ब्राह्मणानां कर्मजातमपवर्गफलप्रदम् ॥ २ ॥ नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः । स याति नरकान्घोरान्काकयोनौ प्रजायते ॥ ३ ॥ नान्यो विमुक्तये पंथा मुक्त्वाऽऽश्रमविधिं स्वकम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ ४ ॥"

इति श्रीरत्नगढनगरनिवासिना श्रीवासिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण कस्तूरीचन्द्रसूनुना नानानिबन्धकर्त्रा श्रीमहादेवभक्तगौडपण्डित श्रीचतुर्थीलाल (चौथमल) शर्मणा कृतायां वाजसनेयिनां नित्यकर्मप्रयोगमालायां नित्यकर्मात्मकः प्रथमो विभागः समाप्तः ॥ १ ॥

---

- वै परिकीर्तिताः ॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ॥ अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः ॥" इति संक्षेपः । इति श्रीजींदराज्यान्तर्गत 'गोतोली' ग्रामवासि पं श्री अमीलालशर्मणां तनूद्भवेन सती 'श्रीरजिना" देवीगर्भजेन बीकानेर—नोहरब्राह्मणपाठशालाप्रधानाध्यापकेन विद्यावारिधि पं० श्रीशिवनारायणशास्त्रिणा निर्मिता प्रथमभागटिप्पणी पूर्तिमगादिति शिवम् ॥

# अथ नैमित्तिककर्मात्मको

## द्वितीयो विभागः ।

अथ पार्थिवशिवपूजाप्रयोगः ॥ तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य । "अमुकगोत्रोऽमुकशर्मा अमुककामोऽहं पार्थिवलिंगपूजां करिष्ये" इति संकल्प्य विभूतिरुद्राक्षधारणं कृत्वा यथाशक्ति पंचाक्षरं जपित्वा न्यासं कुर्यात् ॥ तत्र—"वेदोक्तमंत्रविधिना न्यासं चैव समाचरेत् ॥ सन्ध्यादेवार्चनादौ च प्रतिष्ठादिककर्मसु ॥ १ ॥ न्यासमूलमिदं सर्वं न्यासं पूर्वं तु कारयेत् ॥ न्यासेन रहितं कर्म अर्द्धं गृह्णंति राक्षसाः ॥ २ ॥" अथ न्यासमन्त्रः— ॐ नमो भगवते रुद्राय ॥ "ॐ कारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः ॥ मोकारं तु ललाटे वै भकारं मुखमध्यतः ॥ ॥ ३ ॥ गकारं कंठदेशे च वकारं हृदये न्यसेत् ॥ तेकारं दक्षिणे हस्ते वामे रुकारमेव च ॥ ४ ॥ द्राकार नाभिदेशे च यकारं पादयोर्द्वयोः॥ एवं न्यासविधानेन निष्पापात्मा

---

१ "यथा देहे तथा देवं न्यासं कृत्वा यथाविधि । न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ॥" इत्याग्नेये ॥

भवेन्नरः ॥ ६ ॥ " एवं न्यासं कृत्वा सूर्यायार्घ्यं दत्त्वा ॥ ॐ सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम् ॥ ग्रहीष्यामि प्रसन्ना त्वं लिंगार्थं भव सुप्रभे ॥१॥ इति भूमिं प्रार्थ्य ॥ ॐ ह्रीं पृथिव्यै नम इति षड्वर्णेनाभिमंत्र्य ॥ ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च ॥२॥ " ॐ हराय नम इति शुचिस्थानान्मृदमाहृत्य, शोधितायां तस्यां वँ इत्यमृतबीजाभिमंत्रितजलप्रक्षेपेण संपीड्य तेन पिण्डेन ॐ महेश्वराय नम इति लिंगं कृत्वा स्वपुरतः ॐ शूलपाणये नमः इति पीठादौ प्रतिष्ठाप्य प्राणानायम्य ॥ ततः ॐ अस्य श्रीशिवपंचाक्षरमंत्रस्य वामदेव ऋषिरनुष्टुप्छंदः श्रीसदाशिवो देवता ॐ बीजं नमः शक्तिः शिवाय कीलकं मम सांबसदाशिवप्रीत्यर्थे न्यासे पूजने जपे च विनियोगः ॥ ॐ वामदेवाय ऋषये नमः शिरसि। ॐ अनुष्टुप्छंदसे न० मुखे ॥ ॐ श्रीसदाशिवदेवतायै न० हृदि। ॐ बीजाय न० गुह्ये ॥ ॐ शक्तये नमः पादयोः। ॐ शिवाय कीलकाय न० सर्वांगे। ॐ नं तत्पुरुषाय नमो हृदये। ॐ मं अघोराय नमः पादयोः। ॐ शिं० सद्योजाताय नमो गुह्ये। ॐ वां वामदेवाय नमो मूर्ध्नि ॥ ॐ यं ईशानाय नमो मुखे ॥ ॐ ॐ अंगुष्ठाभ्यां नमः ॥ ॐ नं तर्जनीभ्यां स्वाहा ॥ ॐ मं मध्यमाभ्यां वषट् ॥ ॐ शिं अनामिकाभ्यां हुं ॥

ॐ वां कनिष्ठिकाभ्यां वौषट् ॥ ॐ य करतलकरपृष्ठाभ्यां फट् ॥ ॐ ॐ हृदयाय नमः ॥ ॐ नं शिरसे स्वाहा ॥ ॐ मं शिखायै वषट् ॥ ॐ शिं कवचाय हुं॥ ॐ वांनेत्रत्रयाय वौषट् ॥ ॐ यं अस्त्राय फट् ॥ एवं न्यासं कृत्वा कुंभपूंजां विधाय ॥ "ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं, रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं, विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥" इति ध्यात्वा प्राणप्रतिष्ठां कुर्यात् ॥ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि क्रियामयवपुः प्राणाख्या देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं देवप्राणप्रतिष्ठापने विनियोगः । ब्रह्मविष्णुरुद्रऋ-

---

१ सव्यहस्तधृताक्षतेभ्यः दक्षहस्तेन अक्षतानादाय—"ॐ ऋग्वेदाय नमः । यजुर्वेदाय नमः । सामवेदाय नमः । अथर्ववेदाय नमः । कलशाय नमः । कलशकुम्भाय नमः । रुद्राय नमः । समुद्राय नमः ।" तैरक्षतप्रक्षेपैरेव एभिर्मन्त्रैः संपूज्य, हस्तौ समानीय संप्रार्थयेत्— "देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ ! विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । ब्रह्मणा निर्मितस्त्वं हि मन्त्रैश्चैवामृतोपमैः । प्रार्थयामि च त्वां कुम्भ ! वाञ्छितार्थं प्रयच्छ मे ॥" इति संप्रार्थ्य षोडशोपचारैः सम्पूजयेत इत्यन्यत्र ॥

षिभ्यो नमः शिरसि । ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे ॥ प्राणाख्यदेवतायै न० हृदि ॥ आं बीजाय नमो गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ क्रौं कीलकाय नमः सर्वाङ्गे ॥ इति कृत्वा ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोहं शिवस्य प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रौं यं रं० शिवस्य जीव इह स्थितः ॥ ॐ आं ह्रीं क्रौं यं रं० शिवस्य सर्वेंद्रियाणि ॥ ॐ वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणजिह्वापाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ एवं प्राणप्रतिष्ठां कृत्वा स्थापितं लिङ्गं स्पृशन् ॐ भूः पुरुषं सांबसदाशिवमावाहयामि ॥ ॐ भुवः पुरुषं सांबसदाशिवमावाहयामि ॥ ॐ स्वः पुरुषं सांबसदाशिवमावाहयामि इत्यावाहयेत् ॥ ॐ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् ॥ तावत्त्वं प्रीतिभावेन लिंगेऽस्मिन्सन्निधो भव ॥ १ ॥ इति पुष्पांजलिं दत्त्वा गणेशप्रमुखान्स्वनाममंत्रेण संपूज्य शिवपूजनं कुर्यात् ॥ तद्यथा ॐ नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥ अथोयेऽअस्य सत्वानोहंतेभ्योऽकरं नमः ॥ ॐ शिवाय नमः पाद्यं समर्पयामि ॥ इति पाद्यम्[1] ॥ १ ॥ ॐ गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पंक्त्या सह बृहत्युष्णिहाककुप्सूचीभिः सम्य-

---

१ "दूर्वा च विष्णुकान्ता च श्यामाकं पद्ममेव च । पाद्याङ्गानि च चत्वारि कथितानि समासतः ॥" पादार्थमुदकं पाद्यम् ॥

न्तुत्वा ॐ शिवाय नमः अर्घ्यं समर्पयामि ॥ इत्यर्घ्यम्॥२॥ एवं चतुर्थ्यंतेन सर्वत्र ॥ ॐ त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिव र्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ इत्याचमनम् ॥ ३ ॥ ॐ मधुवाताऽऋतायुते इति मधुपर्कम् ॥४॥ ॐ शिवाय नमः आचमनीयम् ॥ ५ ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ इति जलस्नानम् ॥ ६ ॥ ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥

---

१ गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकमर्घ्यमिति गृह्यादिषु । व्रतराजे—" आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चेति ह्यर्घ्योऽष्टाङ्गः प्रकीर्तितः ॥" सिद्धार्थकः शुभ्रसर्षपः ।

२ दधिमधुघृतान्येकत्र कृतानि मधुपर्कः । बृहत्पराशरः—' संशोधितं दधि मधु कांस्यपात्रे स्थितं घृतम् । कांस्येनान्येन संछन्नं मधुपर्कमितीर्यते ॥ " शोधनमपि तत्रैव—" दधिक्राव्णेतिदध्नश्च वस्त्रान्निष्कासनं च यत् । मधुव्वातेति तिसृभिर्मधुनः शोधनं स्मृतम् ॥ त्रिराज्यमग्नावधिश्रित्य वह्निनानुसृते घृते । घृतं घृतेति मन्त्रेण वस्त्रपूतं च शोधनम् । एतच्छोधनमेतेषां मधुपर्कविधौ मतम् । अन्यत्र मधुपर्कात्तु वस्त्रपूतं हि केवलम् ॥ " आपस्तम्बः— " सर्पिरेकगुणं प्रोक्तं शोधितं द्विगुणं मधु । मधुपर्कविधौ प्रोक्तं सर्पिषा च समं दधि ॥" इति ॥

इति पयःस्नानम् ॥ पुनर्जलस्नानम् ॥ ७ ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंᳬंषितारिषत् ॥ इति दधिस्नानं पुनर्जलस्नानम् ॥ ८ ॥ घृतङ्घृत पावानः पिबतव्वसाँव्वसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहादिशः प्रदिशऽआदिशोव्विदिशऽउद्दिशो दिग्भ्यः स्वाहा ॥ इति घृतस्नानं पुनर्जलस्नानम् ॥ ९ ॥ ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः॥ माध्वीर्न्नः सन्त्वोषधीः॥ मधुनक्तमुतोषसोमधुमत्पार्थिवᳬंरजः ॥ मधुद्यौरस्तुनः पिता ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥ इति मधुस्नानं पुनर्जलस्नानम् ॥ १० ॥ ॐ अपाᳬंरसमुद्वयसᳬंसूर्येसन्तᳬंसमाहितम् ॥ अपाᳬंरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ इति शर्करास्नानम् ॥ पुनः शुद्धोदकस्नानम् ॥ ११ ॥ ॐ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः । सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ इति पंचामृ-

तस्नानम् ॥ १२ ॥ ॐ शुद्धवालꣳसर्व्वशुद्धवालोमणिवाल-स्तऽआश्विनाꣳ श्येतꣳ श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णा-यामाऽअवलिप्तारौद्रानभोरूपाःपार्ज्जन्याः ॥ इति शुद्धोदक-स्नानम् ॥ १३ ॥ ततः स्नानांते ॐ नमस्ते रुद्रम० इति षोडशभिर्ऋग्भिरभिषेकं कुर्यात् ॥ ततः ॐ प्रमुञ्चधन्न्वनस्त्वमु-भयोरार्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवꣳपराताभगवोवप ॥ इति वस्त्रं कौपीनं च ॥ १४ ॥ ततः आचमनम् ॥ ॐ विज्यन्धनुः कपर्दिनोविशल्यो बाणवाँ२ ऽउत ॥ अनेशन्नस्य याऽइषव-ऽआभुरस्यनिषङ्गधिः ॥ इत्याभरणम् ॥ १५ ॥ ॐ ब्रह्मजज्ञान-म्प्रथमम्पुरस्ताद्विसीमतꣳसुरुचोव्वेनऽआवः । सबुध्न्याऽउप-माऽअस्यव्विष्ठाःसतश्चयोनिमसतश्चव्विवः ॥ इति यज्ञो-पवीतमाचमनं च ॥ १६ ॥ ॐ नमः श्वभ्यः श्वपतिभ्यश्चवोन-मोनमोभवायचरुद्रायचनमः शर्वायचपशुपतयेचनमोनील-ग्रीवायचशितिकण्ठायचनमः कपर्दिने ॥ इति गंधम् ॥ १७ ॥

---

१ गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्रमिलितं ज्ञेयं दिव्यं पञ्चामृतं परम् ॥" इति ॥ २ 'स्नानान्ते चार्पयेद्वस्त्रं देवानां प्रीतये सदा ॥ ब्रह्मसूत्रं च दातव्यं पूजाफलमभीप्सुना ॥" इति ॥

ॐ नमः शम्भुवायचमयोभुवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ इत्यक्षताः ॥ १८॥ ॐ नमःपार्य्यायचावार्य्यायचनमः प्रतरणायचोत्तरणायचनमस्तीर्थ्यायचकूल्यायचनमःशष्प्यायचफेन्यायचनमः ॥ इति पुष्पाणि ॥१९॥ ॐ नमोबिल्मिनेचकवचिनेचनमोवर्मिणेच वरूथिनेचनमः श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्यायचनमोधृष्णवे ॥ इति बिल्वपत्राणि॥२०॥ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेण शतेनच ॥ इति दूर्वाः ॥ २१ ॥ ॐ नमःकपर्दिनेचव्युप्तकेशायचनमः सहस्राक्षायच शतधन्वनेचनमोगिरिशयायच शिपिविष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ इति धूपम् ॥ २२ ॥ ॐ नमऽआशवेचाजिरायचनमःशीघ्र्यायच शीभ्यायचनमऽऊर्म्यायचावस्वन्यायचनमोनादेयायचद्वीप्यायच॥ इति दी०॥२३॥ॐ नमोज्येष्ठायचकनिष्ठायचनमः

---

१ पुष्पार्पणप्रकारः कालिकापुराणे—' मध्यमाऽनामिकामध्ये पुष्पं संगृह्य पूजयेत्। अंगुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥" इति ॥ २ दीपश्च गोघृतसंपादितो वेदितव्यः। "दीपे देयं च गोघृतम्" इत्युक्तेरिति बोध्यम् ॥

पूर्व॒जायं॑ चापर॒जायं॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्याय च बु॒ध्न्याय च॒ नमः॑ सो॒भ्याय॑ च ॥ इति नैवेद्यम् ॥ २४ ॥ ॐ त्र्यंबकं॑ यजामहे सु॒गन्धिं॑ पुष्टि॒वर्द्ध॑नम् ॥ उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मुक्षीय॒ माऽमृता॑त् ॥ इत्याचमनम् ॥ २५ ॥ ॐ इ॒मा रु॒द्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्रभ॑रामहे म॒तीः ॥ यथा॒ शम॑सद् द्वि॒पदे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ऽअ॒स्मिन्न॑नातु॒रम् । इति तांबूलम् ॥ २६ ॥ ॐ हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ऽआसीत् ॥ स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ इति दक्षिणाम् ॥ २७ ॥ ॐ नमः शिवाय इत्यनेन ऋतुफलानि पुष्पमालां चार्पयेत् ॥ ततः एकादशरुद्रान्पूजयेत् ॥ ॐ अघोराय नमः ॥ १ ॥ ॐ पशुपतये न०

---

१ गीतासु भगवान् श्रीकृष्णः–“ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥” ‘ अश्नामि ’ इत्यस्य साक्षाद्भक्षणे तात्पर्यमपि प्रीत्या स्वीकरणमेव तदर्थः । यथोक्तं महाभारते शान्तिपर्वणि–“याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ ” ( म० भा० शा० १७१–६३ ) किं बहुना प्रीतिबुभुक्षिता देवा भक्त्यैव प्रसीदन्ति तथा चाम्नायः–“न हवै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति” अतो भक्तिश्रद्धापूर्णेनैव सर्वथा हृदयेन भाव्यम् ॥ २ “त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।” इति भावनया समर्पयेत् ॥

॥२॥ ॐ शिवाय न० ॥३॥ विरूपाय न० ॥४॥ ॐ विश्वरूपाय न० ॥ ५ ॥ ॐ भैरवाय न० ॥ ६ ॥ ॐ त्र्यंबकाय न० ॥ ७ ॥ ॐ शूलपाणये न० ॥ ८ ॥ ॐ कपर्दिने न० ॥ ९ ॥ ॐ ईशानाय न० ॥ १० ॥ ॐ महेशाय न० ॥ ११ ॥ इत्येकादशरुद्रान्संपूज्य ॐ भगवत्यै न० ॥ ॥ १ ॥ ॐ उमादेव्यै न० ॥ २ ॥ ॐ शंकरप्रियायै न० ॥ ३ ॥ ॐ पार्वत्यै न० ॥ ४ ॥ ॐ गौर्यै न० ॥ ५ ॥ ॐ कालिंद्यै न० ॥ ६ ॥ ॐ काटिव्यै० ॥ ७ ॥ ॐ विश्वधारिण्यै० ॥ ८ ॥ ॐ विश्वेश्वर्यै० ॥ ९ ॥ ॐ विश्वमात्रे० ॥ १० ॥ ॐ शिवायै० ॥ ११ ॥ इति शक्तिं पूजयेत् ॥ एवं सगणं रुद्रं संपूज्य वेद्यामष्टमूर्तिमक्षतादिना पूजयेत् ॥ ॐ शर्वाय क्षितिमूर्तये नमः प्राच्याम् ॥ ॐ भवाय जलमूर्तये नमः ऐशान्याम् ॥ ॐ रुद्रायाग्निमूर्तये नमः उदीच्याम्॥ ॐ उग्राय वायुमूर्तये नमो वायव्याम् ॥ ॐ भीमायाकाशमूर्तये नमः प्रतीच्याम् ॥ ॐ पशुपतये यजमानमूर्तये नमः नैर्ऋत्याम् ॥ ॐ महादेवाय सोममूर्तये नमः दक्षिणस्याम् ॥ ॐ ईशानाय सूर्यमूर्तये नमः आग्नेय्याम् ॥ एवं संपूज्य साक्षतजलेन तर्पणं कार्यम् ॥ ॐ भवं देवं तर्पयामि ॥ ॐ शर्वं देवं त० ॥ ॐ ईशानं देवं तर्प० ॥ ॐ पशुपतिं देवं त० ॥ ॐ उग्रं देवं तर्प० ॥ ॐ रुद्रं देव तर्प० ॥ ॐ भीमं देवं

त० ॥ ॐ महांतं देवं त० ॥ ॐ भवस्य देवस्य पत्नीं तर्प० ॥ ॐ शर्वस्य देवस्य पत्नीं तर्प० ॥ ॐ ईशानस्य देवस्य पत्नीं तर्प० ॥ ॐ पशुपतेर्देवस्य पत्नीं त० ॥ ॐ रुद्रस्य देवस्य पत्नीं त० ॥ ॐ भीमस्य देवस्य पत्नीं तर्प० ॥ ॐ महतो देवस्य पत्नीं त० ॥ एवं तर्पणं कृत्वा आरार्तिक्यं कुर्यात् ॥ ततः ॐ युज्ञेनंयुज्ञमंयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् । तेहुनाकंम्महिमानंः सचन्तुयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ इति पुष्पांजलिः ॥ ॐ येतीर्थानिप्रचरंन्ति सृकाहंस्तानिषुङ्गिणंः ॥ तेषांᳬ सहस्रयोजुनेवुधन्वांनि तन्मसि ॥ यानि कानि च पापानि जन्मांतरकृतानि च ॥ तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥ १ ॥ इति प्रदक्षिणात्रयं कार्यम् ॥ ततः–"प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥" इति वदन्नमेत् ॥ ततो यथाशक्ति पंचाक्षरं दशाक्षरं वा मंत्रं जप्त्वा महिमक्षमापराधप्रभृतिपुराणैः प्राकृतैः स्तवैः स्तुत्वा देवं प्रार्थयेत् ॥ "ॐ आवाहनं न जानामि न जानामि विसर्ज्जनम् । पूजां चैव न जानामि क्षमस्व परमेश्वर ॥ ॥ १ ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सदाशिव ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ २ ॥ अन्यथा शरणं

नास्ति त्वमेव शरणं मम ॥ तस्मात्कारुण्यभावेन रक्ष मां परमेश्वर ॥ ३ ॥" इति प्रार्थ्य ॥ " अनेन पूजनेन श्रीसांबसदाशिवः प्रीयताम् ॥ " इति निवेदयेत् ॥ ततो गलताडनं कृत्वा ॐ महादेवाय नमः ॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ॥ शिवः पशुपतिश्चैव महादेवविसर्जनम् ॥ ॥ १ ॥ इति संहारमुद्रया विसर्जयेत् ॥ नंदिपुराणे—"आयुष्मान्धनवाञ्छ्रीमान्पुत्रवान्धान्यवान्सुखी ॥ वरमिष्टं लभेल्लिंगं पार्थिवं यः समर्चयेत् ॥ तस्मात्तु पार्थिवं लिंगं ज्ञेयं सर्वार्थसाधकम् ॥ " इति पार्थिवशिवपूजाविधिः समाप्तः ॥

अथ शिवनीराजनार्त्तिः ॥ " ॐ जय गंगाधर हर जय

---

१ "तस्य परमेश्वरस्यैवाहम्, स परमेश्वरो ममैव स परमेश्वर एवाहम्' इत्येवं भगवच्छरणं त्रिविधम् । यथोक्तं भक्तिरसायने—"तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा । भगवच्छरणत्वं स्यात्साधनाभ्यासपाकतः ॥" तत्राद्यं मृदु इत्युच्यते । यथा—सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥" द्वितीयं 'मध्यमम्' इति भाष्यते । यथा—हस्तमुत्क्षिप्य यातोऽसि बलात् कृष्ण किमद्भुतम् । हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥" अत्र हिन्दीभाषामयं सूरदासवचनम्—बाहँ छुड़ाये जात हो निबल जानिके मोय । हिरदयसे जब जाउगे, तब जानूंगो तोय ॥" तृतीयं च भगवच्छरणम् 'अतिमात्रम्' इति प्रोच्यते । यथा स्वदूतान् प्रति यमोक्तिः—सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात् ॥ २ नीराजनप्रकारस्तु—

गिरिजाधीशा ॥ त्वं मां पालय नित्यं कृपया जगदीशा ॥ हर हर हर महादेव ॥ १ ॥ कैलासे गिरिशिखरे कल्पद्रुमविपिने ॥ गुञ्जति मधुकरपुञ्जे कुञ्जवने गहने ॥ कोकिलकूजितखेलतहंसावनललिता ॥ रचयति कलाकलापं नृत्यति मुदसहिता ॥ हर हर हर महादेव० ॥ २ ॥ तस्मिँल्ललितसुदेशे शाला मणिरचिता ॥ तन्मध्ये हरनिकटे गौरी मुदसहिता ॥ क्रीडा रचयति भूषारञ्जिततनिजमीशं ॥ इंद्रादिकसुरसेवितनामयते शीशम् ॥ हर हर० ॥ ॥ ३ ॥ विबुधवधूर्बहु नृत्यति हृदये मुदसहिता ॥ किन्नरगायनकुरुते सप्तस्वरसहिता ॥ धिनकत थै थै धिनकत मृदङ्ग वादयते । क्वण क्वण ललिता वेणुं मधुरं नादयते ॥ हर हर० ॥ ॥ ४ ॥ रुण रुण चरणे रचयति नूपुरमुज्ज्वलिता ॥ चक्रावर्ते भ्रमयति कुरुते तांधिकतां ॥ तां तां लुप चुप तां तां डमरू वादयते । अगुष्ठांगुलिनादं लासिकतां कुरुते ॥ हर हर० ॥ ५ ॥ कर्पूरद्युतिगौरं पंचाननसहितम् ॥ त्रिनयनशशिधरमौलिं विषधरकण्ठयुतम् ॥ सुंदरजटाकलापं पावकयुतभालम् ॥ डमरुत्रिशूलपिनाकं करधृतनृकपालम् ॥ हर हर० ॥ ६ ॥ मुण्डै रचयति माला पन्नगमुपवीतम् ॥ वामविभागे गिरिजारूपं अतिललितम् ॥ सुंदरसकलशरीरे कृतभस्माभरणम् ॥ इति वृषभध्वजरूपं तापत्रय-

---

—विष्णुधर्मे प्रोक्तः—"आदौ चतुष्पादतले प्रदेयं द्विर्नाभिदेशे मुखमण्डलैकम् । सर्वाङ्गदेशेषु च सप्तवारं नीराजनेऽयं विधिरीश्वरस्य ॥" इति

हरणम् ॥ हर हर० ॥ ७ ॥ शंखनिनादं कृत्वा झल्लरिनादयते ॥ नीराजयते ब्रह्मा वेदऋचां पठते ॥ अति मृदुचरणसरोजं हृदि कमले धृत्वा ॥ अवलोकयति महेशं ईशं अभिनत्वा । हर० ॥ ८ ॥ ध्यानं आरतिसमये हृदये अति कृत्वा ॥ रामस्त्रिजटानाथं ईशं अभिनत्वा ॥ संगीतमेवं प्रतिदिनपठनं यः कुरुते ॥ शिवसायुज्यं गच्छति भक्त्या यः शृणुते ॥ हर हर हर महादेव ॥ ॥ ९ ॥ " इति शिवनीराजनं समाप्तम् ॥

अथ मंत्रपुष्पाञ्जलिमंत्राः ॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ॥ तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १ ॥ ॐ राजाधिराजाय प्रसह्य साहिने ॥ नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यम् ॥ कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय वैश्रवणाय महाराजाय नमः ॥ २ ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यंराज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आन्तादापरार्धात्पृथिव्यै समुद्रपर्यंताया एकराडिति ॥ तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे ॥ आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ इति मंत्रैः पुष्पाञ्जलिं समर्प्य । ॐ सप्तास्या सन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्वानाऽअब-

धन्पुरुषम्पशुम् ॥ १ ॥ यानि कानि च० इति प्रदक्षिणां कृत्वा स्तुतिं कुर्यात् ॥ इति मंत्रपुष्पांजलिः ॥

अथ शिवस्तुतिः ॥ ॐ अंगहीनं क्रियाहीनं विधिहीनं महेश्वर ॥ पूजितोऽसि मया देव तत्क्षमस्व भ्रमात्कृतम् ॥ ॥ १ ॥ यद्यप्युपहृतैः पुष्पैरघास्तैर्भावदूषितैः ॥ केशकीटापविद्धैश्च पूजितोसि मया प्रभो ॥ २ ॥ अन्यत्रासक्तचित्तेन क्रियाहीनेन वा प्रभो ॥ मनोवाक्कायदुष्टेन पूजितोसि त्रिलोचन ॥ ३ ॥ यच्चोपहतपात्रेण कृतमर्घ्यादिकं मया ॥ तामसेन च भावेन तत्क्षमस्व मम प्रभो ॥ ४ ॥ मन्त्रेणाक्षरहीनेन पुष्पेण विफलेन च ॥ पूजितोसि महादेव तत्सर्वं क्षम्यतां मम ॥ ५ ॥ अज्ञानयोगादुपचारकर्म यत्पूर्वमस्माभिरनुष्ठितं ते ॥ तदेव सोढ्वासनकं दयालो पितेव पुत्रानतनो जुषस्व ॥ ६ ॥ अयं दानकालस्त्वहं दानपात्रं भवानेव दाता त्वदन्यं न याचे ॥ भवद्भक्तिमंतः स्थिरां देहि मह्यं कृपाशील शंभो कृतार्थोऽस्मि यस्मात् ॥ ७ ॥ ॐ नमोङ्काररूपाय नमोऽक्षरवपुर्धृते ॥ नमो नादात्मने तुभ्यं नमो बिंदुकलात्मने ॥ ८ ॥ अलिंगलिंगरूपाय रूपातीताय ते नमः ॥ त्वं माता सर्वलोकानां त्वमेव जगतः पिता ॥ ॥ ९ ॥ त्वं भ्राता त्वं सुहृन्मित्रस्त्वं प्रियः प्रियरूपधृक् ॥ त्वं गुरुस्त्वं गतिः साक्षात्त्वं पिता त्वं पितामहः ॥ १० ॥

नमस्ते भगवान्रुद्र भास्करामिततेजसे ॥ नमो भवाय रुद्राय रसायांबुमयाय च ॥ ११ ॥ शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ॥ पशूनां पतये तुभ्यं पावकामिततेजसे ॥ ॥ १२ ॥ भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ महादेवाय सोमाय अमृताय नमोऽस्तु ते ॥ १३ ॥ उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ पार्थिवस्य च लिंगस्य यन्मया पूजनं कृतम् ॥ तेन मे भगवान्रुद्रो वांछितार्थं प्रयच्छतु ॥ ॥ १४ ॥ इति शिवस्तुतिः समाप्ता ॥ श्रीशिवोऽवतु ॥

अथ रुद्राभिषेकविधिः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य " ॐ ममात्मनः ( यजमानस्य वा ) श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षसिद्धिद्वारा सर्वव्याधिनिरासपूर्वकं सर्वाभीष्टसिद्ध्यर्थं श्रीभवानीशंकरमृत्युंजयमहारुद्रदेवताप्रीतये रुद्राभिषेकं करिष्ये " इति संकल्प्य श्रीगणपतिपूजनपूर्वकं श्रीभवानीशंकरं संपूज्य पंचामृतजलदुग्धाद्यविच्छिन्नधारया रुद्राभिषेकं कुर्यात् ॥ तद्यथा—हरिः ॐ गुणानान्त्वागुणपंति ꣳ हवामहे प्रियाणान्त्वाप्रियपंति ꣳ हवामहे निधीनान्त्वां निधिपतिं ꣳ हवामहे व्वसोमम । आहमं जानिगर्ब्भधमात्त्वमंजासिगर्ब्भधम् ॥ १ ॥ गायत्त्रीत्रिष्टुब्जगंत्यनुष्टुप्पङ्क्त्या सह । बृहत्त्युष्णिहां ककुप्सूचीभिंः शम्म्यन्तुत्त्वा ॥ २ ॥

द्विपदाया॒श्चतु॑ष्पदास्त्रि॒पदा॒याश्च॒ षट्प॑दाः ॥ विच्छ॑न्दा॒याश्च॒सच्छ॑न्दाःसू॒चीभि॑ःशम्यन्तुत्वा ॥ ३ ॥ सहस्तो॑माः सहच्छ॑न्दसऽआ॒वृत॑ःसह॒प्रमा॒ऽऋष॑यः स॒प्तदैव्या॑ः ॥ पूर्वे॑षाम्पन्थ॑ां मनु॒दृश्य॒धीराऽअ॒न्वाले॑भिरे॒रथ्यो॒नर॒श्मीन् ॥ ॥ ४ ॥ यज्जाग्र॑तोदू॒रमु॒दैति॒० ॥ ५ ॥ येन॒कर्म॑ाण्यपसो॒० ॥ ६ ॥ यत्प्र॒ज्ञानमु॒तचेतो॒० ॥ ७ ॥ येने॒दम्भूतम्भुव॑नं० ॥ ॥ ८ ॥ यस्मि॒न्नृच॒ः साम॒यजूꣳषि॒० ॥ ९ ॥ सु॒षार॒थिरश्वा॑० ॥ १० ॥ इति रुद्रे प्रथमोऽध्यायः ॥ १ ॥

हरिः ॐ सहस्र॑शीर्षापुरु॑ष० ॥ १ ॥ पुरु॑षऽए॒वेद ꣳ० ॥ २ ॥ ए॒तावा॑नस्यमहि॒मा० ॥ ३ ॥ त्रि॒पादू॒र्द्ध्वऽउदै॒त्पुरु॑ष॒० ॥ ४ ॥ ततो॑ वि॒राड॑जायत० ॥ ५ ॥ तस्मा॑द्य॒ज्ञात्स॑र्व्व॒हु॒तः सम्भृ॑तं० ॥ ६ ॥ तस्मा॑द्य॒ज्ञात्स॑र्व्व॒हु॒तऽऋच॒ः० ॥ ॥ ७ ॥ तस्मा॒दश्वा॑ऽअजायन्त॒० ॥ ८ ॥ तंय्य॒ज्ञम्० ॥ ॥ ९ ॥ यत्पुरु॑ष॒ंव्यद॑धुः० ॥ १० ॥ ब्रा॒ह्म॒णो॑स्य॒मुख॑० ॥ ॥ ११ ॥ च॒न्द्रमा॒मन॑सो० ॥ १२ ॥ नाभ्या॑ऽआसीद॒न्तरि॑क्ष ꣳ० ॥ १३ ॥ यत्पुरु॑षेणह॒विषा॑० ॥

॥ १४ ॥ सुप्तास्यांसन्परिधय० ॥ १५ ॥ यज्ञेनयज्ञमय-
जन्तदेवा० ॥ १६ ॥ अद्भ्यः सम्भृतंपृथिव्यैरसाच्च विश्व-
कर्म्मणःसमवर्त्ततताग्रे । तस्यत्वष्टाविदधद्रूपमेति तन्म-
र्त्यस्य देवत्त्वमाजानमग्ग्रे ॥ १७ ॥ वेदाहमेतम्पुरुषम्म-
हान्तमादित्त्यवर्णन्तमसः पुरस्तात् । तमेवविदित्त्वाति
मृत्त्युमेतिनान्यः पन्थाविद्यतेयनाय ॥ १८ ॥ प्रजापति-
श्चरति गर्ब्भेऽ अन्तरजायमानो बहुधाविजायते । तस्य
योनिम्परिपश्यन्तिधीरास्तस्मिन्ह तस्त्थुर्भुवनानिवि-
श्वा ॥ १९ ॥ योदेवेब्भ्यऽआतपतियोदेवानाम्पुरोहितः ।
पूर्वोयोदेवेब्भ्योजातोनमो रुचायब्राह्मये ॥ २० ॥ रुचम्ब्रा-
ह्मञ्जनयन्तो देवाऽअग्ग्रेतदब्ब्रुवन् । यस्त्वैवम्ब्राह्मणोविद्या-
त्तस्यदेवाऽअसन्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्या-
वहोरात्रेपार्श्वे नक्षत्राणिरूपमश्विनौव्व्यात्तम् । इष्णन्निषाण
मुम्मऽइषाण सर्व्वलोकम्मऽइषाण ॥ २२ ॥ इति रुद्रे द्वितीयो-
ऽध्यायः ॥ २ ॥

हरिः ॐ आशुः शिशानो वृषभोनभीमोघनाघनः क्षोभ-

णश्चर्षणीनाम् । सङ्क्रन्दनोनिमिषऽएकवीरः शतᳪ सेनांअजयत्साकमिन्द्रः ॥ १ ॥ संक्रन्दनेनानिमिषेण जिष्णुनांयुत्कारेणंदुश्च्यवनेन धृष्णुना । तदिन्द्रेणजयत तत्संहद्ध्वंय्युधो नरऽइषुहस्तेनव्वृष्णा ॥ २ ॥ सऽइषुहस्तैः सनिषङ्गिभिर्व्वशीस ᳪ स्रष्टा सयुधऽइन्द्रोगणेन । स ᳪ सृष्टजित्सोमपाबाहुशर्द्ध्युग्ग्रधन्वा प्प्रतिहिताभिरस्ता ॥३॥ बृहस्प्पतेपरिदीयारथेनरक्षोहामित्राँऽअपबाधमानः॥ प्प्रभञ्जन्त्सेनाःप्प्रमृणोयुधाजयन्नस्माकमेद्ध्यविताथानाम्॥४॥ बलविज्ञायस्थविरःप्प्रवीरः सहस्वान्वाजी सहमानऽउग्ग्रः । अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदंव्वज्रबाहुञ्जयन्तमज्ज्मप्प्रमृणन्तमोजसा । इम ᳪ सजाताऽअनुव्वीरयद्ध्वमिन्द्र ᳪ सखायोऽअनुस ᳪ रभद्ध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाहमानोदयोव्वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुद्ध्योस्स्माक ᳪ सेनाऽअवतुप्प्रयुत्सु ॥ ७ ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञः पुरऽएतुसोमः । देवसेना-

नामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्ग्रम् ॥ ८ ॥
इन्द्रस्यवृष्णोव्वरुणस्यराज्ञऽआदित्यानाम्मरुताँ शर्द्धऽ
उग्ग्रम् ॥ महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामु-
दस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्माम-
कानाम्मनाँसि । उद्वृत्रहन्वाजिनां व्वाजिनान्युद्रथाना-
ञ्जयतांय्यन्तुघोषाः ॥ १० ॥ अस्म्माकमिन्द्रः समृतेषुध्ध्व-
जेष्वस्म्माकंयाऽ इषवस्ताजयन्तु । अस्म्माकंव्वीराऽउत्तरे
भवन्त्वस्म्माँऽउदेवाऽअवताहवेषु ॥ ११ ॥ अमीषांचित्तम्प्र-
तिलोभयन्तीगृहाणाङ्गान्न्यप्वेपरेहि । अभिप्प्रेहि निर्दह-
त्त्सुशोकैरन्धेना मित्त्रास्तमसासचन्ताम् ॥ १२ ॥ अवसृ-
ष्टापरा पतशरव्येब्रह्मसँ शिते । गच्छामित्त्रान्प्रप-
द्यस्वमामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥ प्रेताजयतानरऽइन्द्रो-
वःशर्म्मयच्छतु ॥ उग्ग्रावः सन्तुबाहवोनाधृष्ष्यायथा-
सथ ॥ १४ ॥ असौया सेनामरुतः परेषामभ्यैतिनऽओ-
जसा स्पर्द्धमाना । ताङ्गूहततमसापव्व्रतेन यथामीऽ
अन्न्योऽअन्न्यन्नजानन् । ॥ १५ ॥ यत्रबाणाः सम्पतन्ति

कुमारा व्विशिखाऽइव । तन्नऽइन्द्रो ब्बृहस्पतिरदितिः शर्म्मयच्छतु व्विश्वाहाशर्म्मयच्छतु ॥ १६ ॥ मर्म्माणिते व्वर्म्मणा छादयामि सोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्व्वरीयोव्वरुणस्तेकृणोतु जयन्तन्त्वा नुदेवामदन्तु ॥१७॥ इति रुद्रे तृतीयोऽध्यायः ॥ ३ ॥ हरिः ॐ व्विभ्राड्बृहत्० ॥१॥ उदुत्यंजातवेदसं० ॥२॥ येनापावकचक्षसा० ॥ ३ ॥ दैव्यावध्वर्यू० ॥४॥ तम्प्रत्क्कथा पूर्व्वथा० ॥ ५ ॥ अयम्वेनश्चोदयत्० ॥ ६ ॥ चित्रन्देवानां० ॥ ७ ॥ आनऽइडाभिर्व्विदथ० ॥ ८ ॥ यदद्यकच्चवृत्र० ॥ ९ ॥ तरणिर्व्विश्वदर्शतो० ॥ १० ॥ तत्सूर्य्यस्य० ॥ ११ ॥ तन्मित्रस्य० ॥ १२ ॥ बण्महाँऽअसि० ॥ १३ ॥ बट्सूर्य्यश्रवसा० ॥ १४ ॥ श्रायन्तऽइवसूर्य्यं० ॥ १५ ॥ अद्यादेवाऽउदिता० ॥ १६ ॥ आकृष्णेनरजसा० ॥ १७ ॥ (एते मंत्राः पूर्वं ब्रह्मयज्ञे उक्ताः ) इति रुद्रे चतुर्थोऽध्यायः ॥ ४ ॥

हरि ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १ ॥ यातेरुद्रशिवातनूरघोरापापकाशि-

नी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥
यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कु-
रुमाहिᳬसीःपुरुषञ्जगत् ॥ ३ ॥ शिवेनव्वचसात्त्वागिरि-
शाच्छांव्वदामसि ॥ यथानःसर्व्वमिज्जगदयक्ष्मᳬसुमनाऽ-
असत् ॥ ४ ॥ अद्ध्यवोचदधिवक्ताप्प्रथमोदैव्व्योभिषक् ॥
अहींश्चसर्व्वाञ्जम्भयन्त्सर्व्वांश्चयातुधान्न्योधराचीःपरासुव ॥
॥ ५ ॥ असौयस्ताम्रोऽअरुणऽउतबभ्रुः सुमङ्गलः ॥ येचै-
नᳬरुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषाᳬहेडऽईमहे ॥
॥ ६ ॥ असौयोवसर्प्पति नीलग्ग्रीवोव्विलोहितः ॥ उतैनं-
ङ्गोपाऽअदृश्श्रन्नदृश्श्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥
नमोऽस्तुनीलग्ग्रीवाय सहस्राक्षायमीढुषे ॥ अथोयेऽअस्य
सत्त्वानो हन्तेब्भ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्न्वनस्त्वमुभयो-
रार्त्न्योर्ज्ज्याम् ॥ याश्चतेहस्तऽइषवःपराताभगवोव्वप ॥
॥ ९ ॥ विज्ज्यन्धनुः कपर्द्दिनोव्विशल्ल्योबाणवाँ २ ऽउत ॥
अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ यातै
हेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्म्मान्विश्श्वतस्त्व-

मयुक्ष्मया परिभुज ॥ ११ ॥ परितेधन्न्वनोहेतिरस्म्मान्न्वृ-
णक्तुविश्श्वतं ÷ ॥ अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहि-
तम् ॥ १२ ॥ अवतत्त्यधनुष्ट्वठंसहस्स्राक्षशतेषुधे ॥ निशी-
र्य्यशल्ल्यानाम्मुखाशिवोनं÷सुमनाभव ॥ १३ ॥ नमस्तऽ-
आयुधायानाततायधृष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्या-
न्तवधन्न्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअब्भकम्मा-
नऽउक्षन्तमुतमानंऽउक्षितम् । मानोव्वधींपितरम्मोतमात-
रम्मानं÷प्प्रियास्तन्न्वोरुद्ररीरिषं ॥ १५ ॥ मानस्तोकेत-
नयेमानऽआयुषिमानोगोषु मानोऽअश्श्वेषुरीरिषं ॥ मानो-
व्वीरान्न्रुद्रभामिनोव्वधीर्हविष्प्मन्तंसदमित्त्वा हवामहे ॥
॥ १६ ॥ नमोहिरण्ण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमो-
व्वृक्षेब्भ्योहरिकेशेब्भ्यंपशूनाम्पतयेनमोनम÷शष्पिञ्जरा-
यत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टा-
नाम्पतयेनमो नमो बब्भ्लुशाय ॥ १७ ॥ नमो बब्भ्लुशा-
यव्विव्याधिनेन्नानाम्पतयेनमोनमोभवस्य हेत्त्यैजगताम्प-
तयेनमो नमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनम÷सूता

याहंन्त्यैव्वनांनाम्पतंयेनमोनमोरोहिताय ॥ १८ ॥ नमो
रोहितायस्त्थपतंयेव्वृक्षाणाम्पतंयेनमोनमोभुवन्तयेंव्वारिव-
स्कृतायौषंधीनाम्पतंये नमोनमोंमंत्रिणेंव्वाणिजायकक्षाणा-
म्पतंयेनमोनमंऽ उच्चैग्घोंषायाक्रन्दयंतेपत्तीनाम्पतंयेनमो-
नमं÷कृत्स्नायतयां ॥ १९ ॥ नमं÷कृत्स्नायतयाधावंतेस-
त्त्वंनाम्पतंयेनमोनम÷सहंमानायनिव्व्याधिनंऽआव्व्याधि-
नींनाम्पतंयेनमोनमोंनिषङ्गिणेंककुभायंस्तेनानाम्पतंयेन-
मोनमोंनिचेरवेंपरिचरायारंण्यानाम्पतंयेनमोनमोव्वञ्चंते ॥
॥ २० ॥ नमोव्वञ्चंतेपरिव्वञ्चंतेस्तायूनाम्पतंयेनमोनमोंनि-
षङ्गिणंऽइषुधिमतेतस्कंराणाम्पतंयेनमोनमं÷ सृकायिब्भ्यो
जिघांᳪंसद्भ्योमुष्णताम्पतंयेनमोनमोंसिमद्भ्यो नक्तञ्चरं-
द्भ्योविकृन्तानाम्पतंयेनमं÷ ॥ २१ ॥ नमंऽउष्णीषिणेंगिरि-
चरायंकुलुञ्चानाम्पतंये नमोनमं ऽइषुमद्भ्यों धन्वायिब्भ्यं-
श्चवोनमोनमंऽआतन्वानेब्भ्यं÷प्प्रतिदधानेब्भ्यश्चवो नमो-
नमंऽआयच्छद्भ्यो स्यंद्भ्यश्चवोनमोनमों व्विसृजद्भ्यं÷
॥ २२ ॥ नमों व्विसृजद्भ्यो व्विद्ध्यंद्भ्यश्चवोनमोनमं÷

स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः शयानेभ्यऽआसीने-
भ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमः सभा-
भ्यः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्चवो नमो-
नमोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्यो
विविध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृꣳहतीभ्य-
श्चवोनमोनमोगणेभ्यः॥२४॥नमोगणेभ्योगणपतिभ्यश्च
वोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृ-
त्सपतिभ्यश्चवोनमो नमोविरूपेभ्योविश्वरूपेभ्यश्चवोन-
मोनमः सेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः सेनानिभ्य-
श्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमः क्षत्तृभ्यः
सङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवो नमः।
॥ २६ ॥ नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमः कुला-
लेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषादेभ्यः पुञ्जिष्ठेभ्य-
श्चवोनमोनमः श्वनिभ्योमृगयुभ्यश्चवोनमोनमः श्वभ्यः॥
॥ २७ ॥ नमः श्वभ्यः श्वपतिभ्यश्चवोनमोनमोभवायच
रुद्रायचनमः ॥ शर्वायचपशुपतयेचनमोनीलग्रीवायच

शितिकण्ठायचनमः कपर्दिने ॥ २८ ॥ नमः कपर्दिनेचव्युप्त-
केशायचनमः सहस्राक्षायचशतधन्वनेचनमोगिरिशयायच
शिपिविष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय॥२९॥
नमोह्रस्वायचवामनायचनमोबृहतेचवर्षीयसेचनमोवृद्धा-
यचसवृधेचनमोऽग्र्यायचप्रथमायचनमऽआशवे ॥ ३० ॥
नमऽआशवेचाजिरायचनमꣳशीघ्र्यायचशीभ्यायचनमऽ-
ऊर्म्म्यायचावस्वन्यायचनमो नादेयायचद्वीप्यायच॥३१॥
नमोज्ज्येष्ठायचकनिष्ठायचनमः पूर्व्वजायचापरजायच-
नमोमध्यमायचापगल्भायचनमोजघन्यायचबुध्न्यायचन-
मꣳसोभ्याय ॥ ३२ ॥ नमꣳसोभ्यायचप्रतिसर्य्यायच
नमोयाम्यायचक्षेम्यायचनमः श्लोक्यायचावसान्यायच
नमऽउर्व्वर्य्यायचखल्यायचनमोवन्न्याय ॥३३॥ नमोव-
न्यायचकक्ष्यायचनमः श्रवायचप्रतिश्रवायचनमऽआ-
शुषेणायचाशुरथायचनमꣳशूराय चावभेदिनेच नमोबि-
ल्मिने ॥ ३४ ॥ नमोबिल्मिनेचकवचिनेचनमोवर्म्मिणे-
चवरूथिनेचनमः श्रुतायचश्रुतसेनाय चनमोदुन्दुभ्या-

यचाहनन्न्यायचनमोधृष्णवे ॥३५॥ नमोधृष्णवेचप्प्रमृशा-
यंचनमोनिषङ्गिणेचेषुधिमतेचनमंस्तीक्ष्णेषवेचायुधिनेचन-
मंःस्वायुधायंचसुधन्न्वंने च ॥ ३६ ॥ नमंःस्स्रुत्त्यांयचप-
त्थ्यांयचनमः काट्ट्यांयचनीप्प्यांयच नमः कूल्ल्यांयचस-
रस्यांयचनमोनादेयायंच व्वैशन्तायंच नमःकूप्यांय ॥
॥ ३७ ॥ नमः कूप्प्यांयचावट्ट्यायचनमोव्वीद्ध्र्यांयचात-
प्प्यायचनमोमेग्घ्यांयचविद्युत्त्यायंचनमोव्वर्ष्यांयचावर्ष्या-
यंचनमोव्वात्त्यांय ॥३८॥ नमोव्वात्त्यांयचरेष्म्म्यांयचनमो
व्वास्तव्व्यांयचव्वास्तुपायचनमःसोमांयचरुद्रायंचनमंस्ता-
म्म्रायंचारुणायंचनमंःशङ्गवे ॥ ३९ ॥ चपशुपतंयेचनमऽ
उग्ग्रायंचभीमायंचनमोग्ग्रेवधायंचदूरेवधायंचनमोहन्त्रेचह-
नीयसेचनमोव्वृक्षेब्भ्योहरिकेशेब्भ्यो नमंस्तारायं ॥ ४० ॥
नमःशम्भवायंचमयोभवायंचनमः शङ्करायंचमयस्करायं
चनमः शिवायंचशिवतंरायच ॥ ४१ ॥ नमःपार्यायचा-
वार्य्यायचनमः प्प्रतरंणायचोत्तरंणायचनमस्तीर्त्थ्यायचकू-
ल्ल्यायच नमःशष्प्यायचफेन्न्यायचनमः सिकत्त्याय ॥

॥ ४२ ॥ नमः सिकत्त्याय च प्रवाह्याय च नमः किꣳशिला-
य च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमऽइरिण्याय च
प्रपत्थ्याय च ॥ ४३ ॥ नमो व्रज्ज्याय च गोष्ठ्याय च नमस्-
स्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः
काट्याय च गह्वरेष्ठाय च नमः शुष्क्याय ॥ ४४ ॥ नमः शु-
ष्क्याय च हरित्त्याय च नमः पाꣳसव्याय च रजस्याय च न-
मो लोप्प्याय चोलप्याय च नमऽऊर्व्व्याय च सूर्व्याय च नमः पु-
र्ण्याय ॥ ४५ ॥ नमः पुर्ण्याय च पर्णशदाय च नमऽउद्गुर-
माणाय चाभिघ्नते च नमऽआखिदते च प्रखिदते च नमऽइषुकृ-
द्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाꣳ
हृदयेभ्यो नमो विचिन्न्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽ
आनिर्हतेभ्यः ॥ ४६ ॥ द्रापेऽअन्धसस्पते दरिद्र नीललो-
हित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मो च नः
किञ्चनाममत् ॥ ४७ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीरा-
य प्रभरामहे मतीः ॥ यथा शमसद्द्विपदे चतुष्पदे विश्वम्पु-

ष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशिवातनूः
शिवाव्विश्वाहभेषजी ॥ शिवारुद्रस्यभेषजीतयानोमृड
जीवसे ॥ ४९ ॥ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्त्वेषस्य
दुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्ष्वमीढ्वस्तो-
कायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतमशिवोनःसुम-
नाभव । परमेव्वृक्षऽआयुधन्निधायकृत्तिंव्वसानऽआचरपि-
नाकं बिब्भ्रदागहि ॥ ५१ ॥ व्विकिरिदव्विलोहितनमस्तेऽ
अस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्न्यमस्म्मन्निवपन्तुताः
॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासा-
मीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असङ्ख्
ख्यातासहस्राणियेरुद्राऽअधिभूम्म्याम् ॥ तेषाᳬसहस्रयो-
जनेवधन्न्वानितन्न्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवेन्त-
रिक्षेभवाऽअधि ॥ तेषाᳬ० ॥ ५५ ॥ नीलग्ग्रीवाःशिति-
कण्ठादिवᳬरुद्राऽउपश्रिताः । तेषाᳬ० ॥ ५६ ॥ नील-
ग्ग्रीवाःशितिकंठाःशर्व्वाऽअधःक्षमाचराः ॥ तेषाᳬ० ॥
॥ ५७ ॥ येवृक्षेषुशष्पिञ्जरानीलग्ग्रीवाव्विलोहिताः ॥

तेषांꣳ० ॥ ५८ ॥ येभूतानामधिपतयोव्विशिखासः कप-
र्दिनः ॥ तेषांꣳ० ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐलबृ-
दाऽआयुर्य्युधः ॥ तेषांꣳ० ॥ ६० ॥ येतीर्त्थानिप्प्रचर-
न्तिसृकाहस्तानिषङ्गिणः ॥ तेषांꣳ० ॥६१॥ येन्नेषुव्वि-
विद्ध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषांꣳ० ॥ ६२ ॥ यऽ-
एतावन्तश्चभूयांꣳसश्चदिशोरुद्द्रावितस्त्थिरे ॥ तेषांꣳ
सहस्रयोजनेवधन्वानितन्मसि ॥६३॥ नमोस्तुरुद्द्रेभ्योयेदि-
वियेषांव्वर्षमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रती-
चीर्द्दशोदीचीर्दशोर्ध्वाः ॥ तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृड-
यन्तुतेयन्द्विष्म्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥
नमोस्तुरुद्द्रेभ्योयेन्तरिक्षेयेषांव्वातइषवः ॥ तेब्भ्योदशप्प्रा-
चीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेब्भ्योन-
मोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्द्वेष्टि-
तमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तुरुद्द्रेभ्योयेपृथि-
व्व्यांयेषामन्नमिषवः । तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्र-
तीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेब्भ्योनमोऽअस्तुतेनो-

वन्तुतेनोमृडयन्तुतेयन्द्विष्म्मो यश्चनोद्वेष्टितमेषाञ्जम्भे-
दध्मः ॥ ६६ ॥ इति रुद्रे पञ्चमोऽध्यायः ॥ श्रीशिवा-
र्पणमस्तु ॥

हरिः ॐ व्वयꣳसोमव्व्रतेतवमनस्तनूषुबिभ्रतꣳप्रजा-
वन्तꣳसचेमहि ॥ १ ॥ एषतेरुद्रभागꣳ सहस्वस्राम्बिकया
तञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः ॥ २ ॥ अव-
रुद्रमदीमह्यवदेवंत्र्यम्बकम् । यथानोव्वस्यसस्करद्यथा-
नꣳश्रेयसस्करद्यथानोव्यवसाययात् ॥ ३ ॥ भेषजमसि-
भेषजङ्गवेश्वायपुरुषायभेषजम् । सुखम्मेषायमेष्ष्यै ॥४॥
त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबंध-
नान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंय्यजामहे सुगंधिम्प-
तिवेदनम् । उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥
॥ ५ ॥ एतत्ते रुद्रावसन्तेनपरोमूजवतोतीहि । अवततध-
न्वापिनाकव्वासꣳ कृत्तिवासाऽअहिꣳसन्नꣳशिवोतीहि ॥
॥ ६ ॥ त्र्यायुषञ्जमदग्नेꣳकश्यपस्यत्र्यायुषम् । यद्देवेषुत्र्या-
युषन्तन्नोऽअस्तुत्र्यायुषम् ॥ ७ ॥ शिवोनामासिस्वधिति-

स्तेपितानमस्तेऽअस्तुमामाहिᳪसीः । निर्वर्त्तयाम्म्यायुषे-
न्नाद्यायप्प्रजननायरायस्पोषायसुप्प्रजास्त्वायसुव्वीर्य्याय ॥
इति रुद्रे षष्ठोऽध्यायः ॥ ६ ॥

हरिः ॐ व्वाजश्श्चमेप्प्रसवश्श्चमेप्प्रयतिश्श्चमेप्प्रसितिश्श्चमेधीतिश्श्चमेक्क्रतुश्श्चमेस्वरश्श्चमेश्श्लोकश्श्चमेश्श्रावश्श्चमेश्श्रुतिश्श्चमेज्ज्योतिश्श्चमेस्वश्श्चमेयज्ञेनकल्प्पन्ताम् ॥१॥ प्प्राणश्श्चमेपानश्श्चमेव्व्यानश्श्चमेसुश्श्चमेचित्तञ्चमऽआधीतञ्चमेव्वाकचमेमनश्श्चमेचक्षुश्श्चमेश्श्रोत्रञ्चमेदक्षश्श्चमेबलञ्चमेयज्ञेनकल्प्पन्ताम् ॥ २ ॥ ओजश्श्चमेसहश्श्चमऽआत्त्माचमेतनूश्श्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्त्थीनिचमेपरूᳪषिचमेशरीराणिचमऽआयुश्चमे जराचमे यज्ञेनकल्प्पन्ताम् ॥ ॥ ३ ॥ ज्ज्यैष्ठ्यञ्चमऽ आधिपत्यञ्चमे मन्न्युश्चमे भामश्श्चमेमश्श्चमेम्भश्श्चमेजेमाचमे महिमाचमेव्वरिमाचमेप्प्रथिमाचमेव्वर्षिमाचमेद्द्राघिमाचमेव्वृद्धञ्चमेव्वृद्धिश्चमे यज्ञेनकल्प्पन्ताम् ॥ ४ ॥ सत्त्यञ्चमेश्श्रद्धाचमेजगच्चमेधनञ्चमे व्विश्वञ्चमेमहश्श्च मेक्क्रीडाचमे मोदश्श्चमेजातञ्चमे जनिष्यमा-

णञ्चमेसुक्तञ्चमेसुकृतञ्चमे यज्ञेनकल्पंताम् ॥ ५ ॥ ऋतञ्चमेमृतञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमे दीर्घायुत्वञ्चमेनमित्रञ्चमेभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमे यज्ञेन कल्पंताम् ॥ ६ ॥ यन्ताचमे धर्त्ताचमेक्षेमश्चमेधृतिश्चमेविश्वञ्चमेमहश्चमे संविच्चमेज्ञात्रञ्चमे सूश्चमेप्रसूश्चमेसीरञ्च मेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥ शञ्चमेमयश्चमेप्रियञ्चमे नुकामश्चमे कामश्चमे सौमनसश्चमेभगश्चमेद्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमे यशश्चमेयज्ञेनकल्पन्ताम् ॥ ८ ॥ ऊर्क्चमे सूनृताचमे पयश्चमेरसश्चमे घृतञ्चमे मधुचमे सग्धिश्चमेस पीतिश्चमे कृषिश्चमेवृष्टिश्चमे जैत्रञ्चमऽऔद्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्चमेरायश्चमे पुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमे पूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥ वित्तञ्चमेवेद्यञ्चमे भूतञ्चमेभविष्यच्चमेसुगञ्चमेसुपत्थ्यञ्चमेऽऋद्धञ्चमऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमे मतिश्चमेसुमति-

श्श्चमेयुज्ञेनं कल्पन्ताम् ॥ ११ ॥ व्व्रीहयंश्श्चमेयु-
वाश्श्चमेमाषांश्चमे तिलाश्श्चमे मुद्गाश्श्चमेखल्वांश्श्चमे-
प्रियङ्गवश्श्चमेणवश्श्चमेश्श्यामाकांश्श्चमेनीवाराश्श्चमेगोधूमा-
श्श्चमे मसूराश्श्चमे यज्ञेनकल्पन्ताम् ॥ १२ ॥ अश्म्मा-
चमे मृत्तिकाचमेगिरयंश्श्चमेपर्व्वताश्चमेसिकताश्चमे व्वन-
स्प्पतयश्श्चमेहिरंण्यश्चमे यश्श्चमेश्श्यामश्चमे लोहञ्चमेसीसं-
श्चमेत्त्रपुचमेयज्ञेनं कल्प्पंताम् ॥ १३ ॥ अग्निश्श्चंमऽ-
आपश्श्चमेव्वीरुधश्श्चमऽओषधयश्श्चमे कृष्टपच्याश्चमेकृष्टप
च्याश्श्चमेग्राम्म्याश्श्चमेपशवंऽआरण्याश्श्चमेवित्तंचमेव्वि-
त्तिश्श्चमेभुतश्चमेभूतिश्श्चमे यज्ञेनकल्प्पंताम् ॥ १४ ॥ व्वसु-
चमेव्वसतिश्श्चमे कर्म्मंचमे शक्तिश्श्चमेत्र्थश्श्चमऽ एमश्श्च-
मऽइत्याचंमेगतिश्श्चमेयज्ञेनंकल्प्पन्ताम् ॥ १५ ॥ अग्नि-
श्श्चमऽ इन्द्रश्श्चमे सोमश्श्चमऽ इन्द्रश्श्चमे सविताचंमऽइन्द्र-
श्श्चमे सरंस्वतीचमऽइन्द्रश्श्चमेपूषाचंमऽइन्द्रश्चमे बृहस्प्प-
तिश्श्चमऽ इन्द्रश्श्चमे यज्ञेनंकल्प्पन्ताम्॥ १६ ॥ मित्त्रश्श्च-
मऽइन्द्र श्श्चमे व्वरुणश्श्चमऽइन्द्रश्श्चमे धाताचंमऽइन्द्रश्श्च-

मेत्वष्टां चमऽइन्द्रश्श्चमेमुरुतश्श्चमुऽइन्द्रश्श्चमे विश्वेचमेदे-वाऽइन्द्रश्श्चमे युज्ञेनंकल्पंताम् ॥ १७ ॥ पृथिवीचमऽ-इन्द्रश्श्चमेन्तारिंक्षञ्चमुऽइन्द्रश्श्चमेद्यौश्चंमुऽइन्द्रश्श्चमे समाश्श्चमुऽइन्द्रश्श्चमेनक्षत्राणिचमुऽइन्द्रश्श्चमे दिशश्श्चमुऽइन्द्रश्श्चमेयुज्ञेनंकल्पन्ताम् ॥ १८ ॥ अंशुश्श्चमेरश्मिश्श्चमेदाब्भ्यश्श्चमेधिपतिश्श्चमऽउपा ॐ शुश्श्चमेन्तर्य्यामश्चमऽऐन्द्रवायवश्श्चमेमैत्रावरुणश्श्चमऽ आश्विनश्चमेप्प्रतिप्प्रस्थानश्श्चमेशुक्रश्श्चमेमन्थीचमे युज्ञेनं कल्पन्ताम् ॥ ॥ १९ ॥ आग्रयणश्चमेव्वैश्श्वदेवश्श्चमेद्ध्रुवश्चमे वैश्वानरश्श्चमऽऐन्द्राग्नश्श्चमे मुहावैश्श्वदेवश्श्चमे मरुत्वतीयाश्श्चमेनिष्केवल्यश्श्चमे सावित्रश्श्चमे सारस्वतश्श्चमे पात्क्नीवतश्श्चमेहारियोजनश्श्चमे युज्ञेनंकल्पन्ताम् ॥ २० ॥ स्रुचश्श्चमेचमसाश्श्चमे व्वायव्व्यानिचमेद्रोणकलशश्श्चमेग्ग्रावाणश्श्चमे धिषवणेचमे पूतभृञ्चमऽ आधवनीयश्श्चमेव्वेदिश्श्चमेबर्हिश्चमेवभृथश्श्चमे स्वगाकारश्श्चमे युज्ञेनंकल्पन्ताम् ॥ २१ ॥ अग्निश्श्चमघर्म्मश्चमेर्कश्श्चमे

सूर्य्यश्श्चमे प्प्राणश्श्चमेश्श्चमेपश्श्चमेपृथिवीचमेदितिश्श्चमे-
दितिश्श्चमेद्यौश्श्चमेङ्गुलंयः शक्करयोदिशश्श्चमेयज्ञेनकल्-
ल्पन्ताम् ॥ २२ ॥ व्व्रतञ्चमऽऋतवश्श्चमे तपश्श्चमे संव्व-
त्सरश्श्चमेहोरात्त्रेऽऊर्व्वष्ठीवेबृहद्रथन्तरेचमेयज्ञेनकल्प्प-
न्ताम् ॥ २३ ॥ एकाचमेतिस्त्रश्श्चमेतिस्त्रश्श्चमेपञ्चचमे
पञ्चचमेसप्तचमेसप्तचमेनवचमे नवचमऽएकादशचमऽ-
एकादशचमेत्त्रयोदशचमेत्त्रयोदशचमेपञ्चदशचमेपञ्चद-
शचमे सप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽएक-
विर्ठशतिश्श्चमऽएकविर्ठशतिश्श्चमेत्त्रयोविर्ठशतिश्श्चमे-
त्त्रयोविर्ठ शतिश्श्चमेपञ्चविर्ठ शतिश्श्चमेपञ्चविर्ठशति-
श्श्चमेसप्तविर्ठशतिश्श्चमेसप्तविर्ठशतिश्श्चमेनवविर्ठशति-
श्श्चमेनवविर्ठ शतिश्श्चमऽएकत्त्रिर्ठशच्चमऽएकत्त्रिर्ठशच्चमे-
त्त्रयस्त्रिर्ठशच्चमेयज्ञेनकल्प्पंताम् ॥ २४ ॥ चतस्त्रश्श्चमेष्टौ
चमेष्टौचमेद्वादशचमेद्वादशचमेषोडशचमे षोडशचमे व्वि-
र्ठशतिश्श्चमे व्विर्ठशतिश्श्चमेचतुर्विर्ठशतिश्श्चमेचतुर्विर्ठश-
तिश्श्चमेष्टाविर्ठशतिश्श्चमेष्टाविर्ठशतिश्श्चमेद्वात्त्रिर्ठशच्चमे-

द्वात्रिर्ठ॑शच्चमेषट्त्रिर्ठ॑शच्चमेषट्त्रिर्ठ॑शच्चमे चत्वारिर्ठ॑शच्चमे चत्वारिर्ठ॑शच्चमे चतुश्चत्वारिर्ठ॑ शच्चमेचतुश्चत्वारिर्ठ॑ शच्चमेष्टाचत्वारिर्ठ॑शच्चमे यज्ञेनंकल्पन्ताम् ॥ २५ ॥ त्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमे पञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्य्यवाट्चमेतुर्य्यौहीचमेयज्ञेनंकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्चमेपष्ठौहीचमऽउक्षाचमेव्वशाचमऽऋषभश्चमेव्वेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञेनंकल्पन्ताम् ॥ २७ ॥ व्वाजायस्वाहाप्प्रसवायस्वाहापिजायस्वाहाक्रतवेस्वाहाव्वसवेस्वाहाहर्प्पतयेस्वाहान्हेमुग्धायस्वाहा मुग्धायव्वैनर्ठ॑शिनायस्वाहा विनर्ठ॑शिनंआन्त्यायनाय स्वाहान्त्यायभौव्वनाय स्वाहा भुवनस्य पतयेस्वाहाधिपतये स्वाहाप्प्रजापतये स्वाहाइयन्तेराण्म्मित्रायय्यन्तासियमनऽऊर्ज्जेत्वावृष्ट्यैत्वाप्प्रजानान्त्वाधिपत्याय ॥ २८ ॥ आयुर्य्यज्ञेनंकल्प्पतांप्प्राणोयज्ञेनंकल्प्पताञ्चक्षुर्य्यज्ञेनंकल्पतार्ठ॑श्रोत्रंयज्ञेनंकल्प्पतांव्वाग्ग्यज्ञेनंकल्प्पताम्मनो यज्ञेनंकल्प्पतामात्त्मायज्ञेनंकल्प्पताम्ब्र-

ह्मासुज्ञेनं कल्पताञ्ज्योतिर्य्यज्ञेनंकल्पताᳪंस्वर्य्यज्ञेनं क-
ल्पताम्पृष्ठय्यज्ञेनंकल्पतांयज्ञोयज्ञेनंकल्पताम् । स्तोमं-
श्श्चयजुंश्श्चऽऋक्चसामंचबृहच्चं रथन्तुरञ्चंस्वर्देवाऽअग-
न्मामृताऽअभूमप्प्रजापंतेः प्प्रजाऽअंभूमव्वेट्स्वाहा ॥ २९ ॥
इति रुद्रे सप्तमोऽध्यायः ॥ ७ ॥

हरिः ॐ ऋचंव्वाचम्प्रपंद्येमनोयजुः प्प्रपंद्येसामंप्प्राण-
म्प्रपंद्येचक्षुः श्श्रोत्रम्प्रपंद्येव्वागोजंःसुहौजोमयिप्राणापानौ
॥ १ ॥ यन्मेंछिद्रञ्चक्षुंषोहृदंयस्यमनंसोव्वातितृण्णम्बृह-
स्पतिर्म्मेतद्दंधातुशन्नोंभवतुभुवंनस्ययस्पतिः ॥२॥ भूर्भु-
वःस्वः तत्संवितुर्व्वरेण्यम्भर्गोदेवस्यंधीमहि । धियोयोनंः
प्प्रचोदयांत् ॥ ३ ॥ कयांनश्चित्रऽआभुवदूतीसदावृधःऽ
सखां । कयाशचिंष्ठयाव्वृता ॥ ४ ॥ कस्त्वांसत्योमदांना-
म्मᳪहिंष्ठोमत्सदन्धंसःऽ दृढाचिंदारुजेव्वसुं ॥५॥ अभी-
षुणःसखींनामविताजंरितॄणाम् । शतम्भंवास्यूतिभिंः ॥
॥ ६ ॥ कयात्वन्नंऽऊत्याभिप्प्रमंन्दसेव्वृषन् ॥ कयांस्तोतृ-
भ्यऽआभंर ॥ ७॥ इन्द्रोव्विश्श्वंस्यराजतिशन्नोंऽअस्तुद्वि-

पदेशञ्चतुष्पदे ॥ ८ ॥ शन्नोमित्रःशंव्वरुणःशन्नोभवत्व-
र्य्यमा । शन्नऽइन्द्रोबृहस्पतिःशन्नोविष्णुरुरुक्रमः ॥ ९ ॥
शन्नोव्वातःपवताꣳशन्नस्तपतुसूर्य्यः । शन्नःकनिक्रदद्दे-
वः पर्ज्जन्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भवन्तुनः
शꣳरात्रीःप्रतिधीयताम् । शन्नऽइन्द्राग्नीभवतामवोभिः
शन्नऽइन्द्रावरुणारातहव्याशन्नऽइन्द्रापूषणाव्वाजसातौ-
शमिन्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नोदेवीरभिष्टय
ऽआपोभवन्तुपीतयेशंय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योना-
पृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥
॥ १३ ॥ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । महेर-
णायचक्षसे ॥ १४ ॥ योवःशिवतमोरसस्तस्यभाजयतेह-
नः । उशतीरिवमातरः ॥ १५ ॥ तस्माऽअरङ्गमामवोय-
स्यक्षयायजिन्वथ । आपोजनयथाचनः ॥ १६ ॥ द्यौःशा-
न्तिरन्तरिक्षꣳशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयः
शान्तिर्व्वनस्पतयःशान्तिर्व्विश्वेदेवाःशान्तिर्ब्रह्मशा-
न्तिःसर्व्वꣳशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥

॥ १७ ॥ दृतेदृर्ठंहमामित्रस्यमाचक्षुषासर्व्वाणिभूतानि समीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषासर्व्वाणिभूतानि समीक्षे मित्रस्यचक्षुषा समीक्षामहे ॥ १८ ॥ दृतेदृर्ठंहमाज्ज्योक्ते सन्दृशिजीव्यासंज्योक्ते संदृशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे । अन्न्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यर्ठंशिवोभव ॥ २० ॥ नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयित्नवे । नमस्तेभगवन्नस्तुयतः स्वः समीहसे ॥ २१ ॥ यतोयतः समीहसेततोनोऽअभयंकुरु । शन्नः कुरुप्प्रजाभ्योभयन्नः पशुभ्यः ॥२२॥ सुमित्रियानऽआपऽओषधयः सन्तु । दुर्म्मित्रियास्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्ष्मः ॥ २३ ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येमशरदः शतञ्जीवेमशरदः शतꣳ शृणुयामशरदः शतम्प्प्रब्ब्रवामशरदः शतमदीनाः स्यामशरदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥ इति रुद्रे अष्टमोऽध्यायः ॥ ८ ॥

अथ स्वस्तिप्रार्थनामन्त्राध्यायः । ॐ स्वस्तिनऽइन्द्रोवृद्ध-

श्श्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्ताक्ष्यों॑ऽ-
अरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ पयः पृथि-
व्याम्पय॒ऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः । पयस्व-
तीः प्रदिशः सन्तुमह्यम् ॥ २ ॥

ॐसुद्योजातम्प्रपद्यामिसद्योजातायुवैनमोनमः ॥ भवे-
भवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ १ ॥ वामदेवाय-
नमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलवि-
करणायनमोबलविकरणायनमः ॥ २ ॥ बलायनमोबल-
प्रमथायनमः सर्वभूतदमनायनमोमनोन्मनायनमः ॥ ३ ॥
अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वे-
भ्योनमस्तेऽअस्तुरुद्ररूपेभ्यः ॥ ४ ॥ तत्पुरुषायविद्महेमहा
देवाय धीमहि । तन्नोरुद्रः प्रचोदयात् ॥ ५ ॥ ईशानः
सर्वविद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपति-
र्ब्रह्माशिवोमेऽअस्तुसदाशिवोम् ॥ ६ ॥ ॐ सर्वेषां वा-
ऽएषवेदानाꣳ रसोयत्सामसर्वेषामेवैनमेतद्वेदानाꣳ रसे-
नाभिषिञ्चति ॥ ७ ॥ ॐ शान्तिः शान्तिः सुशान्ति-

र्भवतु ॥ सर्वारिष्टशान्तिर्भवतु ॥ एवमभिषेकं कृत्वा वस्त्रादि-मन्त्रपुष्पयुक्तनमस्कारपर्यन्तां पूजां समाप्य ॥ "अनेन रुद्राभिषेकयुक्तपूजाकर्मणा श्रीभवानीशंकरमहामृत्युञ्जयमहारुद्रः प्रीयतां न मम ॥" इत्यर्पयेत् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति रुद्राभिषेकविधिः समाप्तः ॥

अथ गायत्रीपुरश्चरणप्रयोगः ॥ तत्र तावत्सुमुहूर्ते तीर्थादौ बिल्ववृक्षाश्रये वा गत्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य "करिष्यमाणगायत्रीपुरश्चरणे अधिकारसिद्ध्यर्थं कृच्छ्रत्रयममुकप्रत्याम्नायद्वारा अहमाचरिष्ये ॥" इति संकल्प्य धेनुदानहोमसुवर्णादिप्रत्याम्नायविधिना कृच्छ्राणि संपादयेत् ॥ पुनर्देशकालौ संकीर्त्य "मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्विंशतिलक्षजपात्मकं गायत्रीपुरश्चरणं स्वयं विप्रद्वारा वा करिष्ये । तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धाचार्यादि जपकर्तृवरणं च करिष्ये" इति संकल्प्य सुमुखश्चेत्यादिना गणपतिपूजनादि नान्दीश्राद्धान्तं च विधाय नान्दीश्राद्धान्ते "सविता प्रीयताम्" इति पठित्वा देशकालौ संकीर्त्य "गायत्रीपुरश्चरणे जपकर्तारं त्वामहं वृणे" इति पृथक् पृथक् विप्रद्वारा जपे विप्रान्वृणुयात् ॥ ततस्तान्वस्त्रासनकमंडलु-

---

१ "कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥" ( भा० ११ । २ । ३६ ) ॥

मालादिभिः संपूज्य देवताः प्रार्थयेत् ॥ ॐ सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा ॥ पवमानो दिक्पतिर्भूराकाशं खेचरामराः ॥ ब्रह्मशासनमास्थाय कल्पध्वमिह सन्निधिम् ॥ इति पठित्वा ततः कुशाद्यासनोपविष्टः पवित्रपाणिराचम्य देशकालौ स्मृत्वा "अमुकगोत्रोऽमुकशर्माहममुकशर्मणो यजमानस्य सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गायत्रीपुरश्चरणान्तर्गताऽमुकसंख्यापरिमितगायत्रीजपं करिष्ये" इति प्रात्याह्निकजपं संकल्प्य ॥ ॐ गुरवे नमः ॥ ॐ गणपतये नमः ॥ ॐ दुर्गायै नमः ॥ ॐ मातृभ्यो नमः ॥ इति नत्वा त्रिः प्राणानायम्य । ॐ तत्सवितुरिति गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छंदः जपे विनियोगः ॥ ॐ विश्वामित्राय ऋषये नमः शिरसि ॥ ॐ गायत्रीछंदसे नमो मुखे । ॐ सवितृदेवतायै नमो हृदि ॥ इति न्यस्य ॥ ॐ तत्सवितुरित्यंगुष्ठाभ्यां नमः॥ ॐवरेण्यं तर्जनीभ्यां नमः॥ ॐभर्गो देवस्य मध्यमाभ्यां न०॥ ॐधीमह्यनामिकाभ्यां नमः ॥ ॐ धियोयोनः कनिष्ठिकाभ्यां नमः॥ ॐप्रचोदयात् करतलकरपृष्ठाभ्यां न० इति करन्यासं कृत्वा एवमेव हृदयादिषडंगन्यासं कुर्यात्। स यथा–ॐ तत्सवितुरिति हृदयाय नमः॥१॥वरेण्यमिति शिरसे स्वाहा ॥२॥ भर्गोदेवस्येति शिखायै वषट्॥३॥ धीमहीति कवचायहुं ॥ ४ ॥ धियो यो न इति नेत्रयोर्वौं-

षट् ॥६॥ प्रचोदयादिति अस्त्राय फट् ॥ ततो जपः कार्यः ॥ तत्रादौ मालासंस्कारः । कुशोदकसहितः पंचगव्यैर्मालां प्रक्षाल्य ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इत्येतानि पंचाशन्मातृकाक्षराणि अश्वत्थपत्रस्थापितमालायां विन्यस्य ॐसद्यो-जातेति मन्त्रेण मालां पञ्चगव्येन प्रोक्ष्य शीतजलेन प्रक्षाल्य ॐ वामदेवेति चन्दनेनावघृष्याघोरेतिमालां धूपयित्वा ॐ तत्पुरुषेति चन्दनकस्तूर्यादिना लेपयित्वा ॐ ईशान इति मन्त्रेण प्रतिमणिं शतवारं दशवारं वा अभिमन्त्र्य ॐ अघोरेति मन्त्रेण मेरुं दशवारमभिमन्त्रयेत् ॥ ततस्तैरेव मन्त्रैर्मालां पञ्चोपचारैः सम्पूजयेत् ॥ [ मन्त्राः सर्वे रुद्राभिषेके द्रष्टव्याः ] । ततः ॐ महामाये महामाले सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ इति प्रार्थ्य ॥ ॐ अविघ्नं कुरु माले त्वं गृह्णामि दक्षिणे करे ॥ जपकाले च सिद्ध्यर्थं प्रसीद मम सिद्धये ॥ इति तामादाय मन्त्रदेवतां सवितारं ध्यायन् हृदयसमीपे मालां धारयन् मन्त्रार्थं स्मरन्मध्यन्दिनावधि जपेत् । अतित्वरायां सार्द्धत्रयप्रहरावधि जप्त्वान्ते पुनः प्रण-

---

१ बृहस्पतिः—"मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वम-निर्वेदो जपसंपत्तिहेतवः ॥" जपनियमानाह योगियाज्ञवल्क्यः—"ध्यायेत-

वमुक्त्वा ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव ॥ शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥ १ ॥ इति मालां शिरसि निधाय त्रिः प्राणानायम्य पूर्वोक्तं न्यासत्रयं कृत्वा जपमीश्वरार्पणं कुर्यात् ॥ प्रत्यहं समानसंख्य एव जपो न तु न्यूनाधिकः ॥ एवं पुरश्चरणजपसमाप्तौ होमः ॥ "पुरश्चरणसांगतासिद्ध्यर्थं होमविधिं करिष्ये" इति संकल्प्य अग्निं प्रतिष्ठाप्य पीठे सूर्यादिनवग्रहपूजनादि कलशस्थापनान्तं कर्म कृत्वा कुशकण्डिकां कुर्यात् ॥ ततः आज्यभागांते इदं हवनीयद्रव्यमन्वाधानोक्तदेवताभ्योऽस्तु न ममेति यजमानद्वारा त्यागं कृत्वा ॥ अर्कादिसमिच्चर्वाज्याहुतिभिर्ग्रहहोमं संपाद्य प्रधानदेवतां सवितारं चतुर्विंशतिस-

---

—मनसा मन्त्रं जिह्वोष्ठौ नच चालयेत् । न कम्पयेच्छिरो ग्रीवं दन्तान्नैव प्रकाशयेत् ॥ न चङ्क्रमन्न च हसन्न पार्श्वमवलोकयन् । नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥ न पदा पदमाक्रम्य न चैव हि तथाऽऽसनम् । न चासमाहितमना नच संश्रावयञ्जपेत ॥ न क्लिन्नवासाः स्थलगो जपादीनाचरेद्‌बुधः । व्रतादृते नाऽऽर्द्रवासा नैकवासाः समाचरेत् ॥ न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत् । यक्षराक्षसभूतानि सिद्धविद्याधरा गणाः ॥ हरन्ति प्रसभं यस्मात्तस्माद् गुप्तं तु कारयेत् । जपकाले न भाषेत व्रतहोमादिके तथा ॥ एतेष्वेवावसक्तस्तु यद्यागच्छेद् द्विजोत्तमः । अभिवाद्य ततो विप्रं योगं क्षेमं च कीर्तयेत् ॥ अवसक्तः—अवहितः । **इत्यपरार्कः** ॥ १ "कामतोऽकामतो वाऽपि यत्करोमि शुभाऽशुभम् । तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥" गीतासु भगवान् **श्रीकृष्णः**—"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥"

हस्ततिलाहुतिभिस्त्रिसहस्रसंख्याकाभिः पायसाहुतिभिर्घृतमिश्रातिलाहुतिभिर्दूर्वाहुतिभिः क्षीरद्रुमसमिधाहुतिभिश्च तर्पयित्वा शेषेण स्विष्टकृद्धोमं कुर्यात् ॥ होमे सप्रणवव्याहृतिरहित स्वाहांता गायत्री, दूर्वात्रयस्यैकाहुतिः ॥ दूर्वासमिधो दधिमध्वाज्याक्ताः । ततो होमांते बलिदानं कृत्वा यजमानस्याभिषेकः कार्यः ॥ ततः प्रतिलक्षं सुवर्णनिष्कत्रयं तदर्धं वा शक्त्या वा दक्षिणा । होमांते जले देवं सवितारं संपूज्य होमसंख्यादशांशेन २५००० गायत्र्यन्ते सवितारं तर्पयामि इत्युक्त्वा तर्पणं कार्यम् ॥ तर्पणदशांशेन २५० गायत्र्यन्ते आत्मानमभिषिञ्चामि नम इति यजमानमूर्ध्न्यभिषेकः होमतर्पणाभिषेकाणां मध्ये यदेव न सम्भवति तत्स्थाने तत्तद्द्विगुणो जपः कार्यः ॥ अभिषेकसंख्यादशांशेन विप्रभोजनम् ॥ पुरश्चरणं सम्पूर्णमस्तु इति विप्रान् वाचयित्वा ईश्वरार्पणं कार्यम् । प्रत्यहं यज्जाग्रत इति शिवसंकल्पमन्त्रस्य त्रिः पाठः । कर्त्ता ब्राह्मणैः सह हविष्याशी सत्यवाक् अधःशायी ब्रह्मचारी भवेत् ॥ विष्णुशयनमासेषु पुरश्चरणं न कार्यम् ॥ तीर्थादौ शीघ्रं सिद्धिः । बिल्ववृक्षाश्रयेण जपे एकाहात्सिद्धिः ॥ इति धर्मसिन्धौ गायत्रीपुरश्चरणप्रयोगः ॥

---

१ अत्र गीतासु भगवतोपदिष्टो निष्कामकर्मोपदेशोऽप्यूह्यः । दिङ्मात्रं त्विहापि प्रदर्श्यते सौकर्यार्थम्—"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥" ( गी० २ । ४७ ) "मयि सर्वाणि—

अथ गायत्रीशापविमोचनम् ॥ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य ब्रह्मा ऋषिः भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता गायत्रीछन्दः ब्रह्मशापविमोचने विनियोगः ॥ ॐ गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः ॥ तां पश्यन्ति धीराः सुमनसा वाचामग्रतः॥ॐ वेदान्तनाथाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात् ॐ देवी गायत्री त्वं ब्रह्मशापाद्विमुक्ता भव॥१॥ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्त्ता वसिष्ठ ऋषिः वसिष्ठानुगृहीता गायत्री शक्तिर्देवता विश्वोद्भवा गायत्री छंदः वसिष्ठशापविमोचनार्थं जपे विनियोगः ॥ ॐ सोऽहमर्कमयं ज्योतिरहं शिवः आत्मज्योतिरहं शुक्रः सर्वज्योतिरसो-

---

-कर्माणि संन्यस्य-" (गी० ३ । ३० ) "ब्रह्मार्पणं ब्रह्महविः-" ( गी०४।२४ ) " ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" ( गी० ५ । १० ) " युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् " ( गी० ५ । १२ ) " यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥" ( गी० ४ । १९ ) ॥ भागवते प्रह्लादं प्रति श्रीनृसिंहः-' मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः " ( भा० ७ । १० । २३ ) ॥ परमज्ञानिनां कृते नायमुपदेशः, यथाऽऽह श्रीभगवानेव-' न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् " ( गी० ३ । २६ ) ॥ अन्यत्राप्युक्तम्-' अज्ञस्यार्द्धप्रबुद्धस्य सर्वंब्रह्मेति यो वदेत् । महानिरयजालेषु स तेन विनियोजितः ॥" इति ॥

ऽस्म्यहम् ॥ इत्युक्त्वा योनिमुद्रां प्रदर्श्य गायत्रीत्रयं पठित्वा ॥ ॐदेवी गायत्री त्वं वसिष्ठशापाद्विमुक्ता भव ॥२॥ अस्य श्री विश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिः । विश्वामित्रानुगृहीता गायत्री शक्तिर्देवता वाग्देहा गायत्रीछन्दः विश्वामित्रशापविमोचनार्थं जपे विनियोगः॥ ॐ गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये ॥ यन्मुखान्निसृतोऽखिलवेदगर्भः ॥ शापयुक्ता तु गायत्री सफला न कदाचन ॥ शापादुत्तारिता सा तु भुक्तिमुक्तिफलप्रदा ॥ अथ गायत्रीप्रार्थना—"अजरे अमरे चैव ब्रह्मयोनिर्नमोस्तु ते ॥ ब्रह्मशापाद्विमुक्ता भव ॥ वसिष्ठशापाद्विमुक्ता भव ॥ विश्वामित्रशापाद्विमुक्ता भव ॥" इति गायत्री शापविमोचनम् ॥

अथ गायत्रीकवचम् ॥ अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुरुद्रा ऋषयः । ऋग्यजुःसामाथर्वाणि च्छन्दांसि परब्रह्मस्वरूपिणी गायत्री देवता, भूः बीजम्, भुवः शक्तिः,स्वः कीलकम्, गायत्रीप्रीत्यर्थं जपे विनियोगः । वर्णास्त्रां कुंडिकाहस्तां शुद्धनिर्मलज्योतिषीम् । सर्वतत्त्वमयीं वन्दे गायत्रीं वेदमातरम् ॥ १ ॥ अथ ध्यानम् ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयांकुशकशां शूलं

कपालं गुणं शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥
ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे ॥ ब्रह्मविद्या च मे पश्चादुत्तरे मां सरस्वती ॥ १ ॥ पावकी मे दिशं रक्षेत्पावकोज्ज्वलशालिनी॥ यातुधानीं दिशं रक्षेद्यातुधान गणार्दिनीम् ॥ २ ॥ पावमानीं दिशं रक्षेत्पवमानविलासिनी ॥ दिशं रौद्रीमवतु मे रुद्राणी रुद्ररूपिणी ॥ ३ ॥ ऊर्ध्वं ब्रह्माणी रक्षेदधस्ताद्वैष्णवी तथा ॥ एवं दश दिशो रक्षेत्सर्वतो भुवनेश्वरी ॥ ४ ॥ ब्रह्मास्त्रस्मरणादेव वाचां सिद्धिः प्रजायते ॥ ब्रह्मदण्डश्च मे पातु सर्वशस्त्रास्त्रभक्षकः ॥ ॥ ५ ॥ ब्रह्मशीर्षस्तथा पातु शत्रूणां वधकारकः ॥ सप्त व्याहृतयः पान्तु सस्वरा बिंदुसंयुताः ॥ ६ ॥ वेदमाता च मां पातु सरहस्या सदेवता ॥ देवीसूक्तं सदा पातु सहस्राक्षरदेवता ॥ ७ ॥ चतुष्षष्टिकला विद्या दिव्याद्या पातु देवता ॥ बीजशक्तिश्च मे पातु पातु विक्रमदेवता ॥ ८ ॥ तत्पदं पातु मे पादौ जङ्घे मे सवितुः पदम् ॥ वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ ९ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा ॥ धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥ १० ॥ ललाटे नः पदं पातु मूर्धानं मे प्रचोदयात् ॥ तद्वर्णः पातु मूर्धानं सकारः पातु भालकम् ॥ ११ ॥ चक्षुषी मे विकारस्तु श्रोत्रं रक्षेत्तुकारकः । नासापुटे वकारो

मे रेकारस्तु कपोलयोः ॥ १२ ॥ णिकारस्त्वधरोष्ठे च यकारस्तूत्तरोष्ठके । आस्यमध्ये मकारस्तु गोकारस्तु कपोलयोः ॥ १३ ॥ देकारः कण्ठदेशे च वकारः स्कन्धदेशयोः । स्यकारो दक्षिणं हस्तं धीकारो वामहस्तके ॥ ॥ १४ ॥ मकारो हृदये रक्षेद्धिकारो जठरं तथा ॥ धिकारो नाभिदेशं तु योकारस्तु कटिद्वयम् ॥ १५ ॥ गुह्यं रक्षतु योकार ऊरू मे नः पदाक्षरम् ॥ प्रकारो जानुनी रक्षेच्चोकारो जङ्घदेशयोः ॥ १६ ॥ दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम् ॥ जातवेदेति गायत्री त्र्यम्बकेति शताक्षरा ॥ ॥ १७ ॥ सर्वतः सर्वदा पातु आपोज्योतीति षोडशी ॥ इदं तु कवचं दिव्यं बाधाशतविनाशनम् ॥ १८ ॥ चतुष्षष्टिकलाविद्यासकलैश्वर्यसिद्धिदम् । जपारम्भे च हृदयं जपांते कवच पठेत् ॥ १९ ॥ स्त्रीगोब्राह्मणमित्रादिद्रोहाद्यखिलपातकैः ॥ मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ ॥ २० ॥ भूर्जपत्रे लिखित्वैतत्स्वकण्ठे धारयेद्यदि । शिखायां दक्षिणे बाहौ नानाविद्यानिधिर्भवेत् ॥ २१ ॥

इति विश्वामित्रकल्पोक्तं गायत्रीकवचम् ॥

अथ मुद्राप्रदर्शनप्रकारः ॥ सुमुखं सम्पुटं चैवं विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुष्पञ्चमुखं तथा ॥ षण्मुखाधोमुखं चैव व्यापकाञ्जलिक तथा । शकटं यमपाशं च

ग्रन्थितं चोल्मुकोल्मुकम् ॥ प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥ एता मुद्रा न जानाति गायत्री निष्फला भवेत् ॥ इति मुद्राप्रदर्शनम् ॥

अथ गायत्रीतर्पणम् ॥ ॐ गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः गायत्रीतर्पणे विनियोगः॥ॐ भूः ऋग्वेदपुरुषं तर्पयामि ॥ ॐ भुवः यजुर्वेदपुरुषं तर्पयामि॥ ॐ स्वः सामवेदपुरुषं तर्प० ॥ ॐ महः अथर्ववेदपुरुषं० ॥ ॐ जनः इतिहासपुराणपुरुषं० ॥ ॐ तपः सर्वागमपुरुषं त० ॥ ॐ सत्यं सत्यलोकपुरुषं त० ॥ ॐ भूः भूर्लोकपुरुषं० ॥ ॐ भुवः भुवर्लोकपुरुषं० ॥ ॐ स्वः स्वर्लोकपुरुषं० । ॐ भूः एकपदां गायत्रीं तर्पयामि ॥ ॐ भुवः द्विपदां गायत्रीं त० ॥ ॐ स्वः त्रिपदां गायत्रीं तर्प० ॥ ॐ भूर्भुवः स्वः चतुष्पदां गायत्रीं त० ॥ ॐ उषसीं तर्प० ॥ ॐ गायत्रीं तर्प० ॥ ॐ सावित्रीं तर्प० ॥ ॐ सरस्वतीं तर्प० ॥ ॐ वेदमातरं तर्प० ॥ ॐ पृथिवीं तर्प० ॥ ॐ अजां तर्प० ॥ ॐ कौशिकीं तर्प० ॥ ॐ सांकृतिं तर्प० ॥ ॐ सर्वजितां तर्प० ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति गायत्रीतर्पणम् ॥

अथ वेदोक्ताः सबीजा नवग्रहमन्त्राः ॥ आचम्य प्राणा-

## पूजार्थं सूर्यादिनवग्रहमण्डलमिदम् ।




१ "भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥ कृष्णं शनैश्चरं विद्याद् राहुं केतुं तथैव च ॥" एतेषां स्थापन-देशश्चोक्तो मत्स्यपुराणे–"मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । उत्तरेण गुरुं विद्याद् बुधं पूर्वोत्तरेण तु ॥ पूर्वेण भार्गवं विद्यात् सोमं दक्षिणपूर्वके । पश्चिमेन शनिं विद्याद् राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुं स्थापयेच्छुक्ल तण्डुलैः ॥" विस्तरस्तु तत्रैव द्रष्टव्यः ॥

पूजनार्थं
## मंगलयन्त्रमिदम्.



नायम्य संकल्पः कार्यः । "अद्य पूर्वोच्चरित एवंगुणविशेषणविशिष्ट-शुभपुण्यतिथौ ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम जन्मराशेः सकाशाद्विरुद्धचतुर्थाष्टमद्वादशादिस्थानस्थितामुकग्रह-पीडापरिहारद्वारा एकादशस्थानस्थितवत् उत्तमफलप्राप्त्यर्थममुक-ग्रहस्य होमं स्तुतिं जपं वा करिष्ये" इति संकल्प्य वर्तुलमण्ड-लादिषु सूर्यादीन्संपूज्य जपादिकं कुर्यात् ॥ तत्रादित्यमन्त्रः ॥ आकृष्णेनेतिमन्त्रस्य हिरण्यस्तूपाङ्गिरा ऋषिः सूर्यो देवता त्रिष्टुप्छन्दः सूर्यप्रीतये सूर्यमन्त्रजपे विनियोगः ॥ ॐ ह्रां ह्रीं ह्रौं सः ॐ भूर्भुवः स्वः ॐ आकृष्णेनरजसावर्तमानो-निवेशयन्नमृतम्मर्त्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवोयाति भुवनानि पश्यन् ॐ स्वः भुवः भूः ॐ सः ह्रौं ह्रीं ह्रां ॐ सूर्याय नमः ॥ जपसंख्या ७००० कलौ तु २८००० ॥१॥

सोममन्त्रः ॥ इमं देवा इति मन्त्रस्य वरुण ऋषिः अग्नि-र्देवता सोमप्रीतये सोममन्त्रजपे वि० ॥ ॐ श्रां श्रीं श्रौं सः ॐभूर्भुवः स्वः ॐइमन्देवाऽअसपत्नꣳसुवध्वम्महते क्षत्रा-यंमहतेज्ज्यैष्ठ्यांयमहतेजानंराज्ज्यायेन्द्रस्येन्द्रियायं ॥ इम-ममुष्यंपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकं-म्ब्राह्मणानाꣳराजा । ॐस्वः भुवः भूः ॐ सः श्रौं श्रीं श्रां ॐ सोमाय नमः॥जपसंख्या॥ ११००० कलौ४४००० ॥ २ ॥

भौममन्त्रः ॥ अग्निर्मूर्द्धा इति मन्त्रस्य विरूपाङ्गिरस ऋषिः अग्निर्देवता गायत्रीछन्दः भौमप्रीतये भौममन्त्रजपे विनियोगः ॥ ॐ क्राँ क्रीं क्रौं सः ॐ भूर्भुवः स्वः अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्या ऽअयम् ॥ अपाᳬरेताᳬसि जिन्वति ॥ ॐ स्वः भुवः भूः ॐ सः क्रौं क्रीं क्राँ ॐ भौमाय नमः ॥ जप० १०००० कलौ ४०००० ॥ ३ ॥

बुधमन्त्रः ॥ उद्बुध्य इति मन्त्रस्य परमेष्ठी ऋषिः बुधो देवता त्रिष्टुप्छन्दः बुधप्रीतये बुधमन्त्रजपे विनियोगः ॐ ब्राँ ब्रीं ब्रौं सः ॐ भूर्भुवः स्वः ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सᳬसृजेथामयञ्च ॥ अस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ ॐ स्वः भुवः भूः ॐ सः ब्रौं ब्रीं ब्राँ ॐ बुधाय नमः ॥ जपसं० ४००० कलौ १६००० ॥ ४ ॥

बृहस्पतिमन्त्रः ॥ बृहस्पत इति मन्त्रस्य गृत्समद ऋषिः ब्रह्मा देवता त्रिष्टुप्छन्दः बृहस्पतिप्रीतये बार्हस्पत्यमन्त्रजपे वि० ॥ ॐ ह्रां ह्रीं ह्रौं सः ॐ भूर्भुवः स्वः ॐ बृहस्पते ऽअतियदर्य्यो ऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणन्धेहि चित्रम् ॥ ॐ स्वः

भुवः भूः ॐ सः ह्रौं ह्रीं ह्रां ॐ बृहस्पतये नमः ॥ जप०—१९००० कलौ ७६००० ॥ ५ ॥

शुक्रमन्त्रः ॥ अन्नात्परिश्रुत इति मन्त्रस्य प्रजापतिर्ऋषिः अश्विसरस्वतीन्द्रादेवताः जगती छन्दः शुक्रप्रीतये शुक्रमन्त्रजपे विनियोगः ॥ ॐ द्रां द्रीं द्रौं सः ॐ भूर्भुवः स्वः ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः । ऋतेनसत्यमिन्द्रियँविपानँशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ॐ स्वः भुवः भूः ॐ सः द्रौं द्रीं द्रां ॐ शुक्राय नमः ॥ जप० ११००० कलौ ४४००० ॥ ६ ॥

शनिमन्त्रः ॥ शन्नोदेवीरिति मन्त्रस्य दध्यङ्ङाथर्वण ऋषिः आपो देवता गायत्री छंदः शनिप्रीतये शनिमंत्रजपे० ॥ ॐ खां खीं खौं सः ॐ भूर्भुवः स्वः ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ॐ स्वः भुवः भूः ॐ सः खौं खीं खां ॐ शनैश्चराय नमः ॥ जप० २३००० कलौ ९२००० ॥ ७ ॥

राहुमन्त्रः ॥ कयानश्चित्र इति मन्त्रस्य वामदेव ऋषिः राहुर्देवता गायत्री छंदः राहुप्रीतये राहुमंत्रजपे वि० ॥ ॐ

भ्राँ भ्रीं भ्रौं सः ॐ भूर्भुवः स्वः ॐ कयानश्चित्रऽआभुव-दूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॐ स्वः भुवः भूः ॐ सः भ्रौं भ्रीं भ्राँ ॐ राहवे नमः ॥ जप० १८००० कलौ ७२००० ॥ ८ ॥

केतुमन्त्रः ॥ केतुंकृण्वन्निति मंत्रस्य मधुच्छन्दा ऋषिः केतुर्देवता गायत्री छंदः केतुप्रीतये केतुमन्त्रजपे विनियोगः ॐ प्राँ प्रीं प्रौं सः ॐ भूर्भुवः स्वः ॐ केतुङ्कृण्वन्नकेतवे पेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॐ स्वः भुवः भूः ॐ सः प्रौं प्रीं प्राँ ॐ केतवे नमः ॥ जपसंख्या १७००० कलौ ६८००० ॥ ९ ॥ अर्पणम् ॥ "अनेन अमुकग्रहमन्त्र-जपकर्मणा अमुकग्रहरूपी परमेश्वरः प्रीयतां न मम" ॥ इति वेदोक्ता सबीजा नवग्रहमन्त्राः ॥

अथ नवग्रहमङ्गलाष्टकम् ॥ भास्वान्काश्यपगोत्रजोऽरुण-रुचिर्यः सिंहराशीश्वरः षट्त्रिस्थो दशशोभनो गुरुशशी भौमेषु मित्रं सदा ॥ शुक्रो मंदरिपुः कलिङ्गजनितश्चाग्नी-श्वरो देवते मध्ये वर्तुलपूर्वदिग्दिनकरः कुर्यात्सदा मङ्ग-लम् ॥ १ ॥ चंद्रः कर्कटकप्रभुः सितनिभश्चात्रेयगोत्रो-द्भवश्चाग्नेयश्चतुरस्त्रवारुणमुखश्चापोप्युमाधीश्वरः ॥ षट्सप्ता-ग्निदशैकशोभनफलो शौरिः प्रियोऽर्कोगुरुः स्वामी यामुन-

देशजो हिमकरः कुर्य्यात्सदा मङ्गलम् ॥ २ ॥ भौमो दक्षिणदिक्त्रिकोणयमदिग्विघ्नेश्वरो रक्तभः स्वामी वृश्चिकमेषयोः सुरगुरुश्चार्कः शशी सौहृदः ॥ ज्ञोरिः षड्त्रिफलप्रदश्च वसुधास्कन्दौ क्रमाद्देवते भारद्वाजकुलोद्भवः क्षितिसुतः कुर्या० ॥ ४ ॥ सौम्योदङ्मुखपीतवर्णमगधश्चात्रेयगोत्रोद्भवो बाणेशानदिशः सुहृच्छनिभृगुः शत्रुः सदा शीतगुः ॥ कन्यायुग्मपतिर्देशाष्टचतुरः षण्नेत्रकः शोभनो विष्णुः पौरुषदेवते शशिसुतः कुर्या० ॥ ४ ॥ जीवश्चाङ्गिरगोत्रजोत्तरमुखो दीर्घोत्तरासंस्थितः पीतोऽश्वत्थसमिद्धसिंधुजनितश्चापोऽथ मीनाधिपः ॥ सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू समाश्चापरे सप्ताङ्कद्विभवः शुभः सुरगुरुः कुर्या० ॥ ५ ॥ शुक्रो भार्गवगोत्रजः सितनिभः प्राचीमुखः पूर्वदिक्पञ्चांको वृषभस्तुलाधिपमहाराष्ट्राधिपोदुम्बरः ॥ इन्द्राणी मघवानुभौ बुधशनी मित्रार्कचंद्रौ रिपू षष्ठो द्विर्दशवर्जितो भृगुसुतः कुर्या० ॥ ६ ॥ मंदः कृष्णनिभस्तु पश्चिममुखः सौराष्ट्रकः काश्यपः स्वामी नक्रभकुंभयोर्बुधसितौ मित्रे समश्चांगिराः ॥ स्थानं पश्चिमदिक्प्रजापतियमौ देवौ धनुष्यासनः षट्त्रिस्थः शुभकृच्छनी रविसुतः कुर्यात्सदा मङ्गलम् ॥ ७ ॥ राहुः सिंहलदेशजश्च निर्ऋतिः कृष्णांगशूर्पासनो यः पैठीनसिगोत्रसंभ-

वसमिद्दूर्वामुखो दक्षिणः ॥ यः सर्पाद्यधिदैवते च निर्ऋतिः प्रत्याऽधिदेवः सदा षट्त्रिस्थः शुभकृच्च सिंहिकसुतः कुर्यात्सदा मंगलम् ॥ ८ ॥ केतुर्जैमिनिगोत्रजः कुशसमिद्वायव्यकोणे स्थितश्चित्रांगध्वजलांछनो हिमगुहो यो दक्षिणाशामुखः ॥ ब्रह्मा चैव सचित्रचित्रसहितः प्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च बर्बरपतिः कुर्यात्सदा मंगलम् ॥ ९ ॥ इत्येतद्ग्रहमंगलाष्टकमिदं लोकोपकारप्रदं पापौघप्रशमं महच्छुभकरं सौभाग्यसंवर्धनम् ॥ यः प्रातः शृणुयात्पठत्यनुदिनं श्रीकालिदासोदितं स्तोत्रं मंगलदायकं शुभकरं प्राप्नोत्यभीष्टं फलम् ॥ १० ॥ इति नवग्रहमंगलाष्टकानि ॥

अथ महामृत्युञ्जयजपविधिः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ ॐ "मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ( अमुकयजमानस्य वा ) शरीरेऽमुकपीडानिरासद्वारा सद्यः आरोग्यप्राप्त्यर्थं श्रीमहामृत्युञ्जयदेवताप्रीतये अमुकसंख्यापरिमितं श्रीमहामृत्युञ्जयमन्त्रजपमहं करिष्ये " इति संकल्प्य शिवपूजां कृत्वा जपं कुर्यात् ॥ अथ ऋष्यादिन्यासः ॥ ॐ अस्य श्रीमहामृत्युञ्जयमंत्रस्य वसिष्ठ ऋषिः श्रीमृत्युञ्जयरुद्रो देवता । अनुष्टुप्छन्दः । हौं बीजं जूं शक्तिः । सः कीलकं मृत्युञ्जयप्रीत्यर्थं जपे विनियोगः ॥ ॐ वसि-

ष्ठर्षये नमः शिरसि ॥ ॐ अनुष्टुप्छन्दसे नमो मुखे ॥ ॐ श्रीमहामृत्युञ्जयरुद्रदेवतायै नमो हृदये ॥ ॐ हौं बीजाय नमो गुह्ये ॥ ॐ जूं शक्तये नमः पादयोः ॥ ॐ सः कीलकाय नमः सर्वाङ्गेषु ॥ अथ कराङ्गन्यासः ॥ ॐ त्र्यम्बकं अङ्गुष्ठाभ्यां नमः ॥ ॐ यजामहे तर्जनीभ्यां नमः ॥ ॐ सुगन्धिम्पुष्टिवर्द्धनं मध्यमाभ्यां नमः ॥ ॐ उर्व्वारुकमिव बन्धनात् अनामिकाभ्यां नमः ॥ ॐ मृत्योर्मुक्षीय कनिष्ठिकाभ्यां न० ॥ ॐ मामृतात् करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ ( ध्यानम् ) "चन्द्रोद्भासितमूर्धजं सुरपतिं पीयूषपात्रं महद्धस्ताब्जेन दधत्सुदिव्यममलं हास्यास्यपङ्केरुहम् ॥ सूर्येन्द्वग्निविलोचनं करतलैः पाशाक्षसूत्रांकुशांभोजं बिभ्रतमक्षयं पशुपतिं मृत्युञ्जयं तं स्मरे ॥ १ ॥ हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं शिरो द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहन्तं परम्। अङ्कन्यस्तकरद्वयामृतघटं कैलासकान्तं शिवं स्वच्छांभोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे ॥२॥" इति ध्यात्वा ॥ ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि ॥ १ ॥ ॐ हं आकाशात्मकं पुष्पं सम० ॥ २ ॥ ॐ यं वाय्वात्मकं

धूपं स० ॥ ३ ॥ ॐ रं तेजोरूपं दीपं सम० ॥ ४ ॥ ॐ वं अमृतात्मकं नैवेद्यं स० ॥ ५ ॥ ॐ सं सर्वात्मकं मन्त्रपुष्पं समर्पयामि ॥ ६ ॥ एवं मानसोपचारैः सम्पूजयेत् ॥ (मन्त्रोद्धारः) ॐ हौं जूं सः ॐ भूर्भुवः स्वः त्र्यम्बकँ यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् स्वः भुवः भूः ॐ सः जूं हौं ॐ ॥ (इति पञ्चाशद्वर्णात्मको मंत्रो मन्त्रमहोदधौ) ॥ तत उत्तरन्यासं कृत्वा ॥ "गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥ १ ॥ मृत्युञ्जय महारुद्र त्राहि मां शरणागतम् ॥ जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ २ ॥" इति प्रार्थ्य अनेन महामृत्युञ्जयजपाख्येन कर्मणा श्रीमहामृत्युञ्जयः प्रीयतामित्यर्पयेत् ॥ ततो जपसांगतासिद्ध्यर्थं यथाकामनया द्रव्येण दशांशहोमतर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ॥ अथ शुक्रोपासितमृतसञ्जीवनीमन्त्रस्तन्त्रसारे ॥ ॐ तत्सवितुर्वरेण्यं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनं भर्गो देवस्य धीमहि उर्व्वारुकमिव

---

१ वृद्धमनुः—"वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् । तस्य स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम् ॥ अतएव जपार्थं सा 'गोमुखी' ध्रियते जनैः ।"

बन्धनात् धियो योनः प्रचोदयात् मृत्योर्मुक्षीयमामृतात् ॥ इति मन्त्रः । इति मृत्युञ्जयजपः ॥

अथ महामृत्युञ्जयकवचम् ॥ श्रीभैरव उवाच ॥ शृणुष्व परमेशानि कवचं मन्मुखोदितम् ॥ महामृत्युञ्जयस्यास्य न देयं परमाद्भुतम् ॥ १ ॥ यं धृत्वा च पठित्वा च यं श्रुत्वा कवचोत्तमम् ॥ त्रैलोक्याधिपतिर्भूत्वा सुखितोऽस्मि महेश्वरि ॥ २ ॥ तदेव वर्णयिष्यामि तव प्रीत्या वरानने ॥ तथापि परमं तत्त्वं न दातव्यं दुरात्मने ॥ ३ ॥ ॐअस्य श्रीमहामृत्युञ्जयकवचस्य श्रीभैरवऋषिर्गायत्री छंदः श्रीमृत्युञ्जयरुद्रो देवता ॥ ॐ बीजं जूं शक्तिः सः कीलकं हौमिति तत्त्वं श्रीचतुर्वर्गफलसाधनार्थं पाठे विनियोगः । चन्द्रमण्डलमध्यस्थे रुद्रमाले विचित्रिते ॥ तत्रस्थं चिन्तयेत्साध्यं मृत्युं प्राप्तोऽपि जीवति ॥ १ ॥ ॐ जूं सः हौं शिरः पातु देवो मृत्युञ्जयो मम ॥ श्रीशिवो वै ललाटं च ॐ हौं भ्रुवौ सदाशिवः ॥ २ ॥ नीलकण्ठोऽवतान्नेत्रे कपर्दी मेऽवताच्छुती ॥ त्रिलोचनोऽवताद्गण्डौ नासा मे त्रिपुरांतकः ॥ ३ ॥ मुखं पीयूषघटभृदोष्ठौ मे कृत्तिकाम्बरः ॥ हनुं मे हाटकेशानो मुखं बटुकभैरवः ॥ ४ ॥ कन्धरां कालमथनो गलं गणप्रियोऽवतु ॥ स्कंधौ स्कंद-

पिता पातु हस्तौ मे गिरिशोऽवतु ॥ ५ ॥ नखान्म गिरिजानाथः पायादङ्गुलिसंयुतान् ॥ स्तनौ तारापतिः पातु वक्षः पशुपतिर्मम ॥ ६ ॥ कुक्षिं कुबेरवरदः पार्श्वौ मे मारशासनः ॥ शर्वः पातु तथा नाभिं शूली पृष्ठं ममाऽवतु ॥ ७ ॥ शिश्नं मे शंकरः पातु गुह्यं गुह्यकवल्लभः ॥ कटिं कालान्तकः पायादूरू मेऽधकघातकः ॥ ८ ॥ जागरूकोऽवताज्जानू जङ्घे मे कालभैरवः ॥ गुल्फौ पायाज्जटाधारी पादौ मृत्युञ्जयोऽवतु ॥ ९ ॥ पादादिमूर्द्धपर्यंतं सद्योजातो ममावतु ॥ रक्षाहीनं नामहीनं वपुः पात्वमृतेश्वरः ॥ १० ॥ पूर्वे बलविकरणो दक्षिणे कालशासनः ॥ पश्चिमे पार्वतीनाथ उत्तरे मां मनोन्मनः ॥ ११ ॥ ऐशान्यामीश्वरः पायादाग्नेय्यामग्निलोचनः ॥ नैर्ऋत्यां शंभुरव्यान्मां वायव्यां वायुवाहनः ॥ १२ ॥ ऊर्ध्वे बलप्रमथनः पाताले परमेश्वरः ॥ दशदिक्षु सदा पातु महामृत्युञ्जयश्च माम् ॥ १३ ॥ रणे राजकुले द्यूते विषमे प्राणसंशये ॥ पायादों जूं महारुद्रो देवदेवो दशाक्षरः ॥ १४ ॥ प्रभाते पातु मां ब्रह्मा मध्याह्ने भैरवोऽवतु । सायं सर्वेश्वरः पातु निशायां नित्यचेतनः ॥ १५ ॥ अर्द्धरात्रे महादेवो निशान्ते मां महोदयः । सर्वदा सर्वतः पातु ॐ जूं सः हौं मृत्युञ्जयः ॥ १६ ॥ इतीदं कवचं पुण्यं त्रिषु लोकेषु

दुर्लभम् । सर्वमंत्रमयं गुह्यं सर्वतंत्रेषु गोपितम् ॥ १७ ॥ पुण्यं पुण्यप्रदं दिव्यं देवदेवाधिदैवतम् । य इदं च पठेन्मंत्रं कवचं वाचयेत्ततः ॥ १८ ॥ तस्य हस्ते महादेवि त्र्यंबकस्याष्टसिद्धयः ॥ रणे धृत्वा चरेद्युद्धं हत्वा शत्रूञ्जयं लभेत् ॥१९॥ जयं कृत्वा गृहे देवि स प्राप्स्यति सुखं पुनः ॥ महाभये महारोगे महामारीभये तथा ॥२०॥ दुर्भिक्षे शत्रुसंहारे पठेत्कवचमादरात् ॥ सर्वं तत्प्रशमं याति मृत्युञ्जयप्रसादतः ॥ २१ ॥ धनं पुत्रान्सुखं लक्ष्मीमारोग्यं सर्वसम्पदः ॥ प्राप्नोति साधकः सद्यो देवि सत्यं न सशयः ॥ २२ ॥ इतीदं कवचं पुण्यं महामृत्युञ्जयस्य तु ॥ गोप्यं सिद्धिप्रदं गुह्यं गोपनीयं स्वयोनिवत् ॥ इति श्रीमहामृत्युञ्जयकवचम् ॥

अथ सन्तानगोपालमन्त्रस्य नारदऋषिः ॥ अनुष्टुप्छन्दः ॥ श्रीगोपालो देवता ॥ मम ( यजमानस्य वा ) सन्तानगोपालप्रसादसिद्ध्यर्थं जपे विनियोगः ॥ ॐ देवकीसुत गोविन्द अङ्गुष्ठाभ्यां नमः । ॐ वासुदेव जगत्पते तर्जनीभ्यां नमः ॥ ॐ देहि मे तनयं कृष्ण मध्यमाभ्यां नमः ॥ ॐ त्वामहं शरणं गतः अनामिकाभ्यां नमः ॥ ॐ देवकीसुत गोविंद वासुदेव जगत्पते कनिष्ठिकाभ्यां नमः ॥ ॐ देहि मे तनयं कृष्ण त्वामहं शरणं गतः कर-

तलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिपञ्चाङ्गन्यासः ॥ अथ ध्यानम् ॥ ॐ वैकुण्ठतेजसा दीप्तमर्जुनेन समन्वितम् । समर्पयन्तं विप्राय नष्टानानीय बालकान् ॥ १ ॥ मन्त्रोद्धारः ॥ ॐ देवकीसुत गोविंद वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ १ ॥ ( मन्त्रमहोदधौ ) लक्षं जपोऽयुतं होमस्तिलैर्मधुरसंयुतैः ॥ अर्चा पूर्वोदिता चैवं मन्त्रः पुत्रप्रदो नृणाम् ॥ १ ॥ इति मूलमन्त्रः ॥ इति सन्तानगोपालमन्त्रजपविधिः समाप्तः ॥



॥ श्रीः ॥

# अथ अभिलाषाष्टकस्तोत्रम् ।

## विश्वानर उवाच ।

एकं ब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेह नानास्ति किञ्चित् ॥ एको देवो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥ १ ॥ एकः कर्ता त्वं हि सर्वस्य शम्भो नानारूपोऽप्येकरूपोऽप्यरूपः । यद्वत्प्रत्यम्ब्वर्क एकोऽप्यनेकस्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ॥ २ ॥ रज्जौ सर्पः शुक्तिकायां च रूप्यं नैरः पूरस्तन्मृगाख्ये मरीचौ ॥ यद्वत्तद्वद्विश्वगेष प्रपञ्चो यस्मिञ्ज्ञाते तं प्रपद्ये महेशम् ॥ ३ ॥ तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीतभानौ प्रसादः ॥ पुष्पे गन्धो दुग्धमध्ये च सर्पिर्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ॥ ४ ॥ शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रेरघ्राणस्त्वं व्यंघ्रिरायासि दूरात् ॥ व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥ ५ ॥ नो वेदस्त्वामीश साक्षाद्धि वेद नो वा विष्णुर्नो विधाताखिलस्य ॥ नो योगीन्द्रा नेंद्रमुख्याश्च देवा भक्तो वेद

त्वामतस्त्वां प्रपद्ये ॥ ६ ॥ नो ते गोत्रं नापि जन्मापि नाऽऽख्या नो वा रूपं नैव शीलं न देशः ॥ इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः सर्वान्कामान्पूरयेस्तद्भजे त्वाम् ॥ ७ ॥ त्वत्तः सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीस्त्वं च नग्नोऽति शान्तः ॥ त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्किं यत्त्वं नास्यतस्त्वां नतोऽस्मि ॥८॥ स्तुत्वेति भूमौ निपपात विप्रः स दण्डवद्यावदतीव हृष्टः ॥ तावत्स बालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ॥ ९ ॥ तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती ॥ प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ॥१०॥ सर्वान्तरात्मा भगवान्सर्वः सर्वप्रदो भवान् ॥ याच्ञां प्रति नियुंक्ते मां किमीशे दैन्यकारिणीम् ॥११॥ इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ॥ शुचेः शुचिव्रतस्याथ शुचि स्मित्वाऽब्रवीच्छुचिः ॥ १२ ॥ बाल उवाच ॥ त्वया शुचेः ( चे ) शुचिष्मत्यां योऽभिलाषः कृतो हृदि ॥ अचिरेणैव कालेन स भविष्यत्यसंशयम् ॥१३॥ तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते ॥ ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ॥ १४ ॥ अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ॥ अब्दं त्रिकालपठनात्कामदं शिवसन्निधौ ॥ १५ ॥ एतत्स्तोत्रस्य पठनं पुत्रपौत्रधनप्रदम् ॥ सर्वशान्तिकरं वाऽपि सर्वापत्परिनाशनम् ॥ १६ ॥

स्वर्गापवर्गसंपत्तिकारकं नात्र संशयः ॥ प्रातरुत्थाय सुस्नातो लिङ्गमभ्यर्च्य शांभवम् ॥ १७ ॥ वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेत् ॥ वैशाखे कार्तिके माघे विशेषनियमैर्युतः ॥ १८ ॥ यः पठेत्स्नानसमये लभते सकलं फलम् ॥ कार्तिकस्य तु मासस्य प्रसादादहमव्ययः ॥ १९ ॥ तव पुत्रत्वमेष्यामि यस्त्वन्यस्तत्पठिष्यति ॥ अभिलाषाष्टकमिदं न देयं यस्य कस्यचित् ॥ २० ॥ गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ॥ स्त्रिया वा पुरुषेणापि नियमाल्लिंगसन्निधौ ॥ २१ ॥ अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः ॥ इत्युक्त्वाऽन्तर्दधे बालः सोऽपि विप्रो गृहं गतः ॥ २२ ॥

इति श्रीस्कंदपुराणे काशीखंडे अभिलाषाष्टकस्तोत्रं समाप्तम् ।

---

अथ विष्णुहृदयस्तोत्रम् ॥ अस्य विष्णुहृदयस्तोत्रस्य संकर्षण ऋषिरनुष्टुप् त्रिष्टुपगायत्री च यथायोगं छंदः श्रीविष्णुः परमात्मा देवता अभिलषितार्थे जपे विनियोगः । ॐममाग्रतः सदा विष्णुः पृष्ठतश्चापि केशवः । गोविंदो दक्षिणे पार्श्वे वामे च मधुसूदनः ॥ १ ॥ उपरिष्टात्तु वैकुंठो वाराहः पृथिवीतले । अवांतरदिशो याः स्युस्तास्ताः सर्वासु

माधवः ॥ २ ॥ गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा । नरसिंहकृता गुप्तिर्वासुदेवमयोऽस्म्यहम् ॥ ३ ॥ अव्यक्तये वास्य योनिं वदंति व्यक्तं देहं दीर्घमायुर्गतिं च । वह्निं तथा चंद्रसूर्यौ च नेत्रे दिशः श्रोत्रे प्राणमायुश्च वायुः ॥ ४ ॥ वाचश्च वेदा हृदयं नभश्च पृथिवी पादौ तारका रोमकूपाः । सांगोपांगान्यधिदेवताश्च विद्या ह्युपस्थं हि तथा समुद्राः ॥ ५ ॥ तं देवदेवं शरणं प्रजानां यज्ञात्मकं सर्वलोकप्रतिष्ठम् । अजं वरेण्यं वरदं वरिष्ठं ब्रह्माणमीशं पुरुषं नमस्ते ॥ ६ ॥ आद्यं पुरुषमीशान पुरुहूतं पुरुष्टुतम् । ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥७॥ महाचरितमाख्यानं कुरुक्षेत्रं सरस्वतीम् ॥ केशवार्चां च गंगां च कीर्त्तिमान्नावसीदति ॥८॥ ॐ भूःपुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः । ॐभुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ ९ ॥ ॐस्वः पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः । ॐ भूर्भुवः स्वः पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥१० ॥ ॐसंकर्षणाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः । ॐप्रद्युम्नाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ ११ ॥ ॐअनिरुद्धाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ ॐभवोद्भवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ १२ ॥ ॐ

माधवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः । ॐ गोविंदाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥१३॥ ॐमधुसूदनाय पुरुषाय पुरुषरूपाय० ॥ ॐत्रिविक्रमाय पुरुषाय० ॥ १४ ॥ ॐवामनाय पुरुषाय पुरुषरूपाय० ॥ ॐश्रीधराय पुरुषाय पुरुषरूपाय० ॥ १५ ॥ ॐहृषीकेशाय पुरुषाय पुरुषरूपाय० । ॐपद्मनाभाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ १६ ॥ ॐदामोदराय पुरुषाय पुरुषरू० । ॐ सत्याय पुरुषाय पुरुषरूपाय० ॥ १७॥ ॐईशानाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः । ॐसत्यरूपाय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ १८॥ ॐप्रणवेंदुविष्णुशतसहस्रनेत्राय पुरुषाय पुरुषरूपाय वासुदेवाय नमोनमः ॥ १९ ॥ य इदं विष्णुहृदयमधीते ब्रह्महत्यात् पूतोभवति। सुरापानात्पूतो भवति । सुवर्णस्तेयात् पूतो भवति । अगम्यागमनात् पूतो भवति। असत्यसत्यात् पूतो भवति। वृषलीगमनात् पूतो भवति । पतितसंभाषणात् पूतो भवति। अपेयपानात् पूतो भवति । अभक्ष्यभक्षणात् पूतो भवति । अब्रह्मचारी ब्रह्मचारी भवति । अनेकक्रतुमहात् पूतो भवति । कस्यचित्तनुच्छिन्नी भवति । अष्टौ ब्राह्मणान् आह विंशतिसहस्रेणेष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवति । चत्वारो वेदा-

श्चाधीता भवंति । सर्वेषु देवेषु ज्ञातो भवति । सर्वेषु तीर्थेषु स्नातो भवति । विष्णुलोकमवाप्नोति मासेन । न मृत्युर्भविष्यति न शांतिमदः । यत्रयत्रोपजायेत तत्रोपजायते स्मरति चात्मानं भगवान् महाविष्णुरित्याह ॥

इति महार्णवे विष्णुहृदयस्तोत्रम् ।

---

अथ आदित्यहृदयस्तोत्रम् । ततो युद्धपरिश्रांतं समरे चिंतया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥ दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा ॥ २ ॥ रामराम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे विजयिष्यसे ॥ ३ ॥ आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपं नित्यमक्षयं परमं शिवम् ॥ ४ ॥ सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् । चिंताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥ रश्मिमंतं समुद्यंतं देवासुरनमस्कृतम् । पूजयस्व विवस्वंतं भास्करं भुवनेश्वरम् ॥ ६ ॥ सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणाँल्लोकान् पाति गभस्तिभिः ॥ ७ ॥ एष ब्रह्मा च विष्णुश्च शिवः स्कंदः प्रजापतिः । महेंद्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥ पितरो वसवः साध्या अश्विनौ मरुतो

मनुः । वायुर्वह्निः प्रजाः प्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥
आदित्य सविता सूर्यः खगः पूषा गर्भस्तिमान् । सुवर्ण-
सदृशो भानुर्हेमरेता दिवाकरः ॥ १० ॥ हरिदश्वः सह-
स्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा
मार्तण्डकोंऽशुमान् ॥ ११ ॥ हिरण्यगर्भः शिशिरस्तपनोऽ-
हस्करो रविः । अग्निगर्भोऽदितेः पुत्रः शंखः शिशिरनाशनः
॥ १२ ॥ व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः । घन-
वृष्टिरपांमित्रो विंध्यवीथी प्लवंगमः ॥१३॥ आतपी मण्डली
मृत्युः पिंगलः सर्वतापनः ॥ कविर्विश्वो महातेजा रक्तः
सर्वभवोद्भवः ॥ १४ ॥ नक्षत्रग्रहताराणामधिपो विश्वभा-
वनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५॥
नमः पूर्वाय गिरये पश्चिमायाद्रये नमः । ज्योतिर्गणानां
पतये दिनाधिपतये नमः ॥ १६ ॥ जयाय जयभद्राय
हर्यश्वाय नमोनमः । नमो नमः सहस्रांशो आदित्याय
नमो नमः ॥ १७ ॥ नम उग्राय वीराय सारंगाय नमो-
नमः । नमः पद्मप्रबोधाय प्रचंडाय नमोऽस्तु ते ॥ १८ ॥
ब्रह्मेशानाच्युतेशाय सूरायादित्यतेजसे । भास्वते सर्वभक्षाय
रौद्राय वपुषे नमः॥ १९ ॥ तमोघ्नाय हिमघ्नाय शत्रुघ्नाया-
मितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषांपतये नमः ॥२०॥
तप्तचामीकराभाय हरये विश्वकर्मणे। नमस्तमोऽभिनिघ्नाय

रुचये लोकसाक्षिणे ॥ २१ ॥ नाशयत्येष वै भूतं तमेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ ॥२२॥ एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥ देवाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥ २४ ॥ एनमापत्सु कृच्छ्रेषु कांतारेषु भयेषु च । कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥ अस्मिन्क्षणे महाबाहो रावणं त्वं जहिष्यसि । एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् ॥ २७ ॥ एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥ आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥ रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपागतम् । सर्वयत्नेन महतावृतस्तस्य वधेऽभवत् ॥ ३० ॥ अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः । निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥ इति वाल्मीकीयरामायणे आदित्यहृदयम् ॥

अथ पितृस्तोत्रम् । रुचिरुवाच । नमस्येऽहं पितॄञ्छ्राद्धे ये वसन्त्यधिदेवताः । देवैरपि हि तर्प्यंते ये च श्राद्धैः स्वधो-

त्तरैः ॥ १ ॥ नमस्येऽहं पितॄन्स्वर्गे ये तर्प्यन्ते महर्षिभिः । श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥२॥ नमस्येऽहं पितॄन्स्वर्गे सिद्धाः संतर्पयन्ति यान् । श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥ ३ ॥ नमस्येऽहं पितॄन्भक्त्या येऽर्च्यन्ते गुह्यकैरपि । तन्मयत्वेन वाञ्छद्भिर्ऋद्धिमात्यंतिकीं पराम् ॥ ४ ॥ नमस्येऽहं पितॄन्मर्त्यैरर्च्यन्ते भुवि ये सदा । श्राद्धेषु श्रद्धयाभीष्टलोकप्राप्तिप्रदायिनः ॥ ५ ॥ नमस्येऽहं पितॄन् विप्रैरर्च्यन्ते भुवि ये सदा । वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥ ६ ॥ नमस्येऽहं पितॄन् ये वै तर्प्यंतेऽरण्यवासिभिः ॥ वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकिल्बिषैः ॥ ७ ॥ नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकब्रह्मचारिभिः । ये संयतात्मभिर्नित्यं संतर्प्यन्ते समाधिभिः ॥ ८ ॥ नमस्येऽहं पितॄन् श्राद्धै राजन्यास्तर्पयंति यान् । कव्यैरशेषैर्विधिवल्लोकत्रयफलप्रदान् ॥ ९ ॥ नमस्येऽहं पितॄन्वैश्यैरर्च्यन्ते भुवि ये सदा । स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥ ॥ १० ॥ नमस्येऽहं पितॄन् श्राद्धैर्ये शूद्रैरपि भक्तितः । संतृप्यन्ते जगत्यत्र नाम्ना ज्ञाताः सुकालिनः ॥ ११ ॥ नमस्येऽहं पितॄन् श्राद्धैः पाताले ये महासुरैः । संतर्प्यन्ते स्वधाहारैस्त्यक्तदंभमदैः सदा ॥ १२ ॥ नमस्येऽहं पितॄन् श्राद्धैरर्च्यन्ते ये रसातले । भोगैरशेषैर्विधिवन्नागैः कामान-

भीप्सुभिः ॥ १३ ॥ नमस्येऽहं पितॄन् श्राद्धैः सर्पैः संतर्पितान् सदा । तत्रैव विधिवन्मंत्रभोगसंपत्समन्वितैः ॥१४॥ पितॄन्नमस्ये निवसन्ति साक्षाद्ये देवलोके च तथांतरिक्षे । महीतले ये च सुरादिपूज्यास्ते मे प्रयच्छंतु मयोपनीतम् ॥ ॥ १५ ॥ पितॄन्नमस्ये परमात्मभूता ये वै विमाने निवसति मूर्त्ताः । यजन्ति यानस्तमलैर्मनोभिर्योगीश्वराः क्लेशविमुक्तिहेतून् ॥ १६ ॥ पितॄन्नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यफलाभिसंधौ । प्रदानसक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु ॥१७॥ तृप्यंतु तेऽस्मिन् पितरः समस्ता इच्छावतां ये प्रदिशंति कामान् । सुरत्वमिन्द्रत्वमतोऽधिकं वा सुतान् पशून् स्वानि बलं गृहाणि ॥ १८॥ सोमस्य ये रश्मिषु येऽर्कबिम्बे शुक्ले विमाने च सदा वसंति । तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैर्गंधादिना पुष्टिमितो व्रजंतु ॥ १९ ॥ येषां हुतेऽग्नौ हविषा च तृप्तिर्ये भुञ्जते विप्रशरीरभाजः ॥ ये पिंडदानेन मुदं प्रयांति तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥२०॥ ये खड्गिमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दिव्यमनोहरैश्च । कालेन साकेन महर्षिवर्यैः संप्रीणितास्ते मुदमत्र यान्तु ॥ २१ ॥ कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषाममरार्चितानाम् । तेषां तु सान्निध्यमिहास्तु पुष्पगंधान्नभोज्येषु मया कृतेषु ॥ २२ ॥ दिने-

दिने ये प्रतिगृह्णतेऽर्च्चां मासान्तपूज्या भुवि येऽष्टकासु । ये
वत्सरान्तेऽभ्युदये च पूज्याः प्रयान्तु ते मे पितरोऽत्र तृप्तिम्
॥ २३ ॥ पूज्या द्विजानां कुमुदेंदुभासो ये क्षत्रियाणां च
नवार्कवर्णाः । तथा विशां ये कनकावदाता नीलीनिभाः
शूद्रजनस्य ये च ॥ २४ ॥ तेऽस्मिन् समस्ता मम पुष्प-
गंधधूपान्नतोयादिनिवेदनेन । तथाग्निहोमेन च यांतु तृप्तिं
सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ २५ ॥ ये देवपूर्वाण्य-
तितृप्तिहेतोरश्नंति कव्यानि शुभाहुतानि । तृप्ताश्च ये भूति-
सृजो भवंति तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥२६॥
रक्षांसि भूतान्यसुरांस्तथोग्रान्निर्णाशयन्तस्त्वशिवं प्रजा-
नाम् । आद्याः सुराणाममरेशपूज्यास्तृप्यन्तु तेऽस्मिन्प्रण-
तोऽस्मि तेभ्यः॥२७॥ अग्निष्वात्ता बर्हिषदा आज्यपाः सो-
मपास्तथा । व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता
मया ॥२८॥ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दि-
शम् । तथा बर्हिषदः पान्तु याम्यायां पितरस्तथा ॥ २९ ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । रक्षोभूतपिशा-
चेभ्यस्तथैवासुरदोषतः ॥ ३० ॥ सर्वतश्चाधिपस्तेषां यमो
रक्षां करोतु मे । विश्वो विश्वभुगाराध्यो धर्म्यो धन्यः शुभा-
ननः ॥ ३१ ॥ भूतिदो भूतिकृद्भूतिः पितृणां ये गणा नव ।

कल्याणः कल्पतां कर्त्ता कल्पः कल्पतराश्रयः॥३२॥ कल्पताहेतुरनघः षडिमे ते गणाः स्मृताः। वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ॥ ३३ ॥ विश्वपाता तथा धाता सप्तैवैते गणास्तथा। महान् महात्मा महितो महिमावान्महाबलः ॥ ३४ ॥ गणाः पंच तथैवेते पितॄणां पापनाशनाः। सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ॥ ३५ ॥ पितॄणां कथ्यते चैतत्तथा गणचतुष्टयम् ॥एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ॥ ३६ ॥ ते मेऽनुतृप्तास्तुष्यंतु यच्छन्तु च सदा हितम् ॥ ( सप्तार्चिस्तवम् ) अमूर्त्तानां च मूर्त्तानां पितॄणां दीप्ततेजसाम् ॥३७॥ नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम्। इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा ॥ ३८ ॥ सप्तर्षीणां तथान्येषां तान्नमस्यामि कामदान्। मन्वादीनां मुनीन्द्राणां सूर्य्याचंद्रमसोस्तथा ॥ ३९ ॥ तान्नमस्याम्यहं सर्व्वान् पितरश्चार्णवेषु ये। नक्षत्राणां ग्रहाणां च वाय्वग्न्योर्नभसस्तथा ॥ ४० ॥ द्यावापृथिव्योश्च तथा नमस्यामि कृतांजलिः। देवर्षीणां ग्रहाणां च सर्वलोकनमस्कृतान् ॥ ४१ ॥ अभयस्य सदा दातॄन्नमस्ये हं कृतांजलिः। नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ॥ ४२ ॥ स्वयंभुवे नमस्यामि ब्रह्मणे योगचक्षुषे। सोमाधारान् पितृगणान् योगमूर्तिधरांस्तथा ॥

॥४३॥ नमस्यामि तथा सोमं पितरं जगतामहम् ॥ अग्नि-
रूपांस्तथैवान्यान्नमस्यामि पितृनहम् ॥ ४४ ॥ अग्नीषोम-
मयं विश्वं यत एतदशेषतः । ये तु तेजसि ये चैते सोम-
सूर्य्याग्निमूर्त्तयः ॥ ४५ ॥ जगत्स्वरूपिणश्चैव तथा ब्रह्म-
स्वरूपिणः । तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यत-
मानसाः । नमोनमो नमस्ते मे प्रसीदन्तु स्वधाभुजः ॥
॥ ४६ ॥ पितर ऊचुः । स्तोत्रेणानेन च नरो यो मां स्तो-
ष्यति भक्तितः । तस्य तुष्टा वयं भोगानात्मज्ञानं तथो-
त्तमम् ॥ ४७ ॥ शरीरारोग्यमर्थं च पुत्रपौत्रादिकं तथा ।
प्रदास्यामो न संदेहो यच्चान्यदभिवांछितम् ॥ ४८ ॥ तस्मा-
त्पुण्यफलं लोके वाञ्छद्भिः सततं नरैः । पितृणां चाक्षयां
तृप्तिं स्तव्यां स्तोत्रेण मानवैः ॥ ४९ ॥ वाञ्छद्भिः सततं
स्तव्याः स्तोत्रेणानेन वै यतः । श्राद्धे च य इमं भक्त्या
अस्मत्प्रीतिकरं स्तवम् ॥ ५० ॥ पठिष्यंति द्विजाग्र्याणां
भुञ्जतां पुरतः स्थिताः । स्तोत्रश्रवणसंप्रीत्या सन्निधाने
परे कृते ॥ ५१ ॥ अस्माकमक्षयं श्राद्धं तद्भविष्यत्यसंश-
यम् । यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ॥ ५२ ॥
अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा । अश्राद्धार्हैरुप-
हृतैरुपहारैस्तथा कृतम् ॥ ५३ ॥ अकालेऽप्यथवाऽदेशे
विधिहीनमथापि वा । अश्रद्धया वा पुरुषैर्दंभमाश्रित्य वा

कृतम् ॥५४॥ अस्माकं तृप्तये श्राद्धं तथाप्येतदुदीरणात् । यत्रैतत्पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् ॥ ५५ ॥ अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी । हेमंते द्वादशाब्दानि तृप्तिमेतत्प्रयच्छति ॥५६॥ शिशिरे द्विगुणाब्दांश्च तृप्तिस्तोत्रमिदं शुभम् । वसंते षोडश समास्तृप्तये श्राद्धकर्मणि ॥५७॥ ग्रीष्मे च षोडशे वैतत्पठितं तृप्तिकारकम् । विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन साधिते ॥ ५८ ॥ वर्षासु तृप्तिरस्माकमक्षया जायते रुचे । शरत्काले पि पठितं श्राद्धकाले प्रयच्छति ॥ ५९ ॥ अस्माकमेतत्पुरुषैस्तृप्तिं पंचदशाब्दिकाम् । यस्मिन् गृहे च लिखितमेतत्तिष्ठति नित्यदा ॥ ६० ॥ सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति । तस्मादेतत्त्वया श्राद्धे विप्राणां भुंजतां पुरः ॥ ६१ ॥ श्रावणीयं महाभाग अस्माकं पुष्टिहेतुकम् । इत्युक्त्वा पितरस्तस्य स्वर्गता मुनिसत्तम ॥ ६२ ॥

इति मार्कंडेयपुराणे रुचिमनुना कृतं रुचिस्तवं समार्चिस्तवं च पितृस्तोत्रम् ॥

अथ तुलसीमहिमा (बृहद्धर्मपुराणे) । विष्णुरुवाच । "एकतः सर्वनैवेद्यं नानापुष्पविभूषणम् । एकतः पत्रमेकं ते द्वादशाक्षरमंत्रवत् ॥ १ ॥ श्राद्धे च तर्पणे चैव दाने नैवेद्यदापने । त्वत्पत्रेण विना न स्यात्तत्तत्कर्मफलोत्तरम् ॥२॥"

अथ तुलसीदर्शनमंत्रः—" देवि विष्णुप्रिये मातस्तुलसि प्रियदर्शने। हरिदर्शनदीपार्चिः प्रसीद द्विजवल्लभे ॥१॥"

तुलसीप्रणाममंत्रः—"विष्णुप्रीतिकरे मातर्नमस्ते तुलसीश्वरि। पवित्रीकुरु मेऽङ्गानि विष्णवङ्गहर्षकारिणि ॥ १ ॥"

तुलसीस्पर्शनमंत्रः—"वैकुण्ठेश्वरपादाब्जवासिनि प्रियदर्शने। स्पृशामि त्वां महापापसंचयान्मे प्रणाशय ॥ १ ॥"

तुलसीस्थानमार्ज्जनमंत्रः-"मातस्तुलसि कल्याणि स्थलं ते सुमनोहरम्। क्रीडंत्यागत्य विबुधा मार्जये तत्प्रसीद मे॥१॥"

तुलसीग्रहणमंत्रः—"मातस्तुलसि कल्याणि गोविंदचरणप्रिये। केशवार्थे चिनोमि त्वां प्रसीद शुभदर्शने ॥ १ ॥"

स्कंदपुराणे " तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया। केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥ १ ॥ तुलसी हेमरूपासि कृष्णरूपेण मंजरी। शालिग्रामहितार्थाय मम दोषो न दीयते ॥ १ ॥"

तुलसीग्रहणे निषेधकालः ( वायुपुराणे )-"अस्नात्वा तुलसीं छित्त्वा यः पूजां कुरुते नरः। सोऽपराधी भवेत्सत्यं तत्सर्वं निष्फलं भवेत् ॥१॥ पूर्णिमायाममायां च द्वादश्यां रविसंक्रमे। तैलाभ्यंगे च स्नातेन मध्याह्ने निशि संध्ययोः॥२॥ अशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि वा। तुलसीं ये च चिन्वंति ते छिंदति हरेः शिरः ॥ ३ ॥ धर्मपुराणे-"नाशुचिः

संस्पृशेदेतां नोपानच्चरणोऽपि च । पश्चिमास्यो न चिनुयात् पक्षान्तद्वादशीष्वपि ॥१॥ स्पृशेन्नैव च सङ्क्रांत्यां न रात्रौ सायमेव च । पद्मपुराणे–"देवार्थे तुलसीछेदो होमार्थे समिधां तथा । इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥ १ ॥ पंकजं पंचरात्रं स्याद्दशरात्रं च बिल्वकम् । एकादशाहं तुलसी नैव पर्युषिता भवेत् ॥ १ ॥"

अथ बिल्वपत्रमहिमा धर्मपुराणे-" यथा मे त्रीणि नत्राणि यथा गंगाजलं मम । तथा प्रियतमा लक्ष्मि त्रिपत्रः श्रीफलच्छदः ॥१॥ स्वर्णमुक्ताप्रवालादिपुष्पाण्यन्यानि च ध्रुवम् । श्रीफलच्छदवृक्षस्य कलां नार्हति कोटिकाम् ॥१॥ ऊर्द्धपत्रं हरो ज्ञेयः पत्रं वामविधिः स्वयम् । अहं दक्षिणपत्रं च त्रिपत्रदलमित्यतः ॥२॥ अस्य छायां च पत्रं च लंघयेन्न पदा स्पृशेत् । हरंते लंघनादायुः पादस्पर्शाच्छ्रियं हरेत्॥" ॥ ३ ॥ बिल्ववृक्षदर्शनमंत्रः-" बिल्ववृक्ष महाभागः महेशस्य सदा प्रिय । शिवदर्शनकृज्ज्योतिः प्रसीदाब्धिसुतास्तन ॥ ॥१॥" बिल्वप्रणाममंत्रः-" ॐ नमोबिल्वतरवे सदा शंकररूपिणे ॥ सफलानि ममाङ्गानि कुरुष्व शिवहर्षद ॥ १ ॥" स्पर्शनमंत्रः–" शिवपूजकमालूर प्रियस्पर्शमहातरो । स्पृशामि त्वां महापापसंचयान्मे प्रणाशय ॥ १ ॥ " स्थलमार्जनमंत्रः-"देववृक्ष वरश्रेष्ठ स्थलं ते सुमनोहरम् ॥ क्रीडन्त्या-

गत्य विबुधा मार्जये तत्प्रसीद मे ॥१॥" ॐद्रुमाय श्रीफलाय नमः इति पूजनमंत्रः। पत्रग्रहणमंत्रः—"पुण्यवृक्ष महाभाग मालूर श्रीफलप्रभो। महेशपूजनार्थाय त्वत्पत्राणि चिनोम्यहम् ॥ १ ॥ पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम्। यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ॥२॥" भविष्ये-"बिल्वपत्रस्य प्लुवनं दण्डं हित्वा त प्लावयेत् ॥ वृत्तसंप्लावनादेव सिद्धिं हरति राक्षसः ॥ १ ॥" प्लावयेदर्पयेदित्यर्थः। शिवरहस्ये-"पत्रं त्रिनेत्रं प्रियमेव बिल्वमपात्रमप्यद्रिसुते सुपात्रम्। करोति मे लिंगसमर्चनासु शुष्कं तथा पर्युषितं पवित्रम् ॥ १ ॥ नैतत्त्याज्यमुमे वदंति निगमाः स्याच्छूद्रकेणाहतं विध्या वाप्यऽविधानतो हतमुमे श्रीपत्रमेव प्रियम्। शुष्कं पर्युषितं च कीटसहितं न त्याज्यमेवं शिवे तत्राऽलब्धमहो तथान्यकुसुमं बिल्वाख्यया पातयेत् ॥ २ ॥ रत्नस्वर्णविनिर्मितोरुकुसुमं यादृक् च संक्षालितं पूर्वेद्युः प्रतिपादितं गिरिसुते सम्यक् पुनः पूजयेत् ॥ तद्वत्क्षालितमेव बिल्वमगजे संक्षालितं पूजयेत्तत्रालाभविधौ शिवार्चकधनैर्निर्माल्यता नोचिता ॥ ३ ॥" बृहद्धर्मपुराणे—"पक्षान्तद्वादशीसायंमध्याह्नभिन्नकालतः। शाखाभङ्गो न कर्तव्यो नैवारोहेत्तथा तरुम् ॥ १ ॥ वरमारुह्य चिनुयान्न शाखाभंजनं क्वचित् ॥ षण्मासानंतरं बिल्वपत्रं

पर्युषित भेवत् ॥ २ ॥ चैत्रादिचतुरो मासान् शंभवे परमात्मने ॥ दत्तं स्याद्बिल्वपत्रैकं लक्षधेनुसमं सुराः ॥ ३ ॥” इति बिल्वपत्रमहिमा ।

अथ तुलसीपूजाप्रयोगः ॥ तत्रादौ तुलसीपश्चिमतः प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य । देशकालौ स्मृत्वा मम समस्तपातकशमनपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथामिलितोपचारैः श्रीतुलसीपूजां करिष्ये । इति संकल्पयेत् । “ध्यायामि तुलसीं देवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मकह्लारवराभयचतुर्भुजाम् ॥ १ ॥ किरीटहारकेयूरकुण्डलादिविभूषिताम् ॥ धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ॥ ॥ २ ॥ ” इति ध्यानम् । भगवत्यै तुलस्यै नमः आवाहनम् ॥ १ ॥ विष्णुवल्लभायै नमः आसनम् ॥ २ ॥ सर्वदेवमयायै नमः पाद्यम् ॥३॥ सर्वतीर्थमयायै नमः अर्घ्यम्॥ ॥ ४ ॥ दैत्यान्तकृत्प्रियायै नमः आचमनीयम् ॥५॥ सर्वलोकहितायै नमः स्नानम् ॥ ६ ॥ लक्ष्मीसहोदरायै नमः वस्त्रयुग्मं कंचुकीं च ॥७॥ महादेव्यै नमः गंधं कुंकुमं च ॥८॥ रमावासायै नमः पुष्पाणि ॥ ९ ॥ अभीष्टदायै नमः धूपम् ॥ ॥ १० ॥ पापहारिण्यै नमः दीपम् ॥ ११ ॥ भगवत्यै नमः नैवेद्यम् । आचमनं च ॥ १२ ॥ अमृतसंभूतायै नमः मुखवासतांबूलं ऋतुफलानि च ॥ १३ ॥ अमृतरूपिण्यै नमः

दक्षिणाम् ॥१४॥ जगद्धात्र्यै नमः कर्पूरेण नीराजनम्॥१५॥ सुदक्षिणायै नमः प्रदक्षिणाम् ॥ १६ ॥ परमेश्वर्य्यै नमः पुष्पांजलिम् ॥१७॥ अभीष्टदायै नमः नमस्कारम् ॥१८॥ एवं षोडशोपचारैः संपूज्य प्रार्थयेत् । "सौभाग्यं संततिं देवि धनं धान्यं च मे सदा ॥ आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ १ ॥ अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये । देवैस्त्वं निर्मिता पूर्वमर्च्चितासि मुनीश्वरैः ॥ २ ॥ अतो मां सर्वदा भक्त्या कृपादृष्ट्या विलोकय । पतेरायुश्च भाग्यं

---

पञ्चोपचाराः—जाबालिः—"ध्यानमावाहनं चैव भक्त्या यच्च निवेदनम् । नीराजनं प्रणामश्च पञ्च पूजोपकारकाः ॥" अन्यच्च—"गन्धपुष्पे धूपदीपौ नैवेद्यः पञ्च ते क्रमात् ॥" दशोपचाराः—ज्ञानमालायाम्—"अर्घ्यं पाद्यं चाचमनं स्नानं वस्त्रनिवेदनम् । गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥" षोडशोपचाराः—ज्ञानमालायाम्—"आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्कार्पणं स्नानं वसनाभरणानि च ॥ सुगन्धः सुमनोधूपौ दीपो नैवेद्यमेव च । माल्यानुलेपने चैव नमस्कारो विसर्जनम् ॥" नागदेवः—"आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च गन्धमाल्यादिभिः क्रमात्॥ धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणाम् । उद्वासनं षोडशकमेवं देवार्चने विधिः ॥" उद्वासनम्=संहारमुद्रया विसर्जनम् ॥ साष्टाङ्गप्रणामो यथा—"उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥" अन्यच्च—"कूर्मवच्चतुरः पादाः शिरस्तत्रैव पञ्चमम् । मनोबुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्ग उच्यते ॥" द्वौ हस्तौ द्वौ पादौ, इत्येवं चतुरः पादान् संकुचीकृत्य तत्रैवं शिरश्च संकुचीकृत्य यत्र कूर्मवत् स्थीयते स साष्टाङ्गः ।

च सदा देहि हरिप्रिये ॥ ३ ॥ पूतनाभयसंत्रासाद्रक्षितश्च यथा हरिः । तथा संसारसंत्रासाद्रक्ष मे वंशमुत्तमम् ॥४॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनःप्रिये ॥ ५ ॥” तुलसीमंगलम् । “श्रीमत्कार्तिकशुक्लगा तिथिवरा चैकादशी द्वादशी तस्यां गोरजलग्नके वधुवरौ साक्षाज्जगन्नायकौ । श्रीकृष्णस्तुलसीविवाहमकरोत्तस्मिन् विवाहोत्सवे तौ देवौ भवतां सदा शुभकरौ लक्ष्मीकरौ मंगलम् ॥ १ ॥” इति तुलसीपूजाविधानम् ।

अथ धात्री ( आमलकी ) पूजनम् । तच्च । आश्विनपौर्णमासीमारभ्य कार्तिकपूर्णिमापर्य्यंतं कार्यम् । अशक्तस्तु अंतिमदिनत्रयं पूर्णिमायामामलक्येकादश्यां वा कर्त्तव्यम् । तत्र तावत् धात्रीसमीपे स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य देशकालौ संकीर्त्य । ममाखिलपापक्षयपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं धात्रीमूले विष्णुपूजां धात्रीपूजां च करिष्ये । इति संकल्प्य गणेशं पूजयेत् । ततो वेदीमध्ये विष्णुप्रतिमां संस्थाप्य षोडशोपचारैः संपूज्य पुष्पपूजांते पुष्पाक्षतैरंगपूजां कुर्यात् । तद्यथा–दामोदराय नमः पादौ पूजयामि ॥ १ ॥ केशवाय नमः कटी पूजयामि ॥ २ ॥ नारायणाय नमः उदरं पूजयामि ॥ ३ ॥ वामनाय नमः कंठं पूजयामि ॥ ४ ॥ श्रीधराय नमः बाहुद्वयं पूजयामि ॥ ५ ॥ गोविंदाय नमः

मुखं पूजयामि ॥ ६ ॥ सहस्राक्षाय नमः नेत्रे पूजयामि ॥ ॥ ७ ॥ सर्वेश्वराय नमः ललाटं पूजयामि ॥ ८ ॥ विष्णवे नमः शिरः पूजयामि ॥ ९ ॥ त्रिविक्रमाय नमः सर्वाङ्गं पूजयामि ॥ १० ॥ ततो नमस्कारानंतरं विशेषार्घ्यं पुष्प-श्रीफलसुवर्णसहितं दद्यात् । तत्र मंत्रः । नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः । नमस्ते सहस्रपदे पुरुषाय नमोऽस्तु ते ॥ १ ॥ सहस्रनाम्ने देवेश प्रसीद त्वं ममाच्युत । अर्घ्यं गृहाण भगवन् सर्वकामप्रदो भव ॥ २ ॥ ततः प्रार्थयेत् । भगवन् देवदेवेश लोकनाथ जगत्पते । अक्षया संततिर्मे-ऽस्तु दामोदर नमोऽस्तु ते ॥१॥ ततो धात्रीपूजनम् । धात्र्यै नमः । इति नाममंत्रेण षोडशोचारैः धात्रीं संपूज्य । गंधोत्तर-मंगपूजा कार्या । विश्वरूपायै नमः पादौ पूजयामि ॥ १ ॥ सुरूपायै० कटी० ॥ २ ॥ अब्धिसंभवायै० हृदयं० ॥३॥ लोकमात्रे० मुखं० ॥४॥ धात्र्यै नमः शिरः पूजयामि॥५॥ एवं संपूजयेत् । ततोऽष्टदिक्षु अष्टौ दीपान् बलिं च धात्र्यै नमः इति दत्त्वा । तथैव अष्टकृत्वः सूत्रेण वेष्टयित्वा अष्टौ प्रदक्षिणाः कृत्वा षोडश नमस्कारांश्च कुर्यात् । तद्यथा—शांत्यै नमः ॥१॥ कांत्यै नमः ॥ २ ॥ मेधायै नमः ॥ ३ ॥ प्रकृत्यै नमः ॥ ॥ ४ ॥ विष्णुपत्न्यै नमः ॥ ५ ॥ महालक्ष्म्यै नमः ॥ ६ ॥ रमायै नमः ॥७॥ कमलायै नमः ॥८॥ इंदिरायै नमः ॥

॥ ९ ॥ कल्याण्यै नमः ॥ १० ॥ कमनीयायै० ॥ ११ ॥ सावित्र्यै नमः ॥ १२ ॥ जगद्धात्र्यै नमः ॥ १३ ॥ गायत्र्यै नमः ॥ १४ ॥ धृत्यै नमः ॥ १५ ॥ अव्यक्तायै नमः ॥ ॥ १६ ॥ ततः "धात्रिदेवि नमस्तुभ्यं सर्वपापक्षयंकरि। वर्चस्वं कुरु मां देवि धनवंतं तथा कुरु ॥ १ ॥ पुत्रान्पौत्रान्बलं प्रज्ञां देहि मे जगदीश्वरि। संवत्सरकृतं पापं दूरीकुरु ममाक्षये ॥ २ ॥ इति प्रार्थयेत्। ततो धात्रीमूले सव्येनैव तर्पणं कुर्यात्। "पितापितामहाश्चान्ये अपुत्रा येच गोत्रिणः। वृक्षयोनिगता ये च ये च कीटत्वमागताः ॥ ॥ १ ॥ तिर्यग्योनिगता ये च ये च ब्रह्माण्डमध्यगाः। पिशाचत्वं गता ये च ये च प्रेतत्वमागताः ॥ २ ॥ ते पिबंतु मया दत्तं धात्रीमूलेऽक्षयं पयः। ते सर्वे तृप्तिमायान्तु धात्रीमूले निषेचनात्" ॥ ३ ॥ एवं तर्पणं कृत्वान्ते उद्यापनं कुर्यात् ॥ इति धात्रीपूजाप्रयोगः ॥

अथ अश्वत्थपूजनविधिः। आचम्य प्राणानायम्य देशकालौ स्मृत्वा मम समस्तपापक्षयपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमश्वत्थपूजां करिष्य इति संकल्प्य गणपतिं स्मरेत्। ततः। "अश्वत्थाय वरेण्या सर्वैश्वर्यप्रदायिने। अन्ततः शिवरूपाय वृक्षराजाय ते नमः ॥ १ ॥" ॐ अश्वत्थाय नमः आवाहनम्। मूलतो ब्रह्मरूपाय मध्यतो विष्णुरू-

पिणे । नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥ २ ॥
ॐअश्वत्थाय नमः आसनम् । अग्निगर्भः शमीगर्भो देव-
गर्भः प्रजापतिः । हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु
ते ॥ ३ ॥ इति पाद्यम् । आयुर्बलं यशो वर्चः प्रजाः पशु-
वसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
॥ ४॥ इत्यर्घ्यम् । त्वं क्षीरफल कश्चैव शीतलश्च वनस्पते ।
त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ ५ ॥ इत्या-
चमनीयम् । चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे । बोधि-
तत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ६ ॥ इति स्नानम् ।
एकादशात्मरुद्रोऽसि वसूनां च शिरोमणिः । नारायणो-
ऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ ७ ॥ इति वस्त्रम् ।
क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते । सत्येन तेन
वृक्षेंद्र मामपि श्रीर्निषेवताम् ॥ ८ ॥ इति यज्ञोपवीतमाचमन
च ॥ श्रीखण्डं चंदनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं
सुरश्रेष्ठ गृहाण देवपिप्पल॥९॥ इति गंधम् । यं दृष्ट्वा मुच्यते
रोगैः स्पृष्ट्वा पापैः प्रमुच्यते । यदाश्रयाच्चिरंजीवी तमश्वत्थं
नमाम्यहम् ॥१०॥ इति पुष्पाणि । वनस्पतिरसोद्भूतः सर्वौष-
धिविजृंभितः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
॥११॥इति धूपम् । साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश मम ज्ञानप्रदो भव ॥ १२ ॥ इति दीपम् ।
नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि

परत्रेह परां गतिम् ॥१३॥ इति नैवेद्यम् आचमनीयं च ॥ आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम् । देहि देव महावृक्ष त्वामहं शरणं गतः ॥ १४ ॥ इति पूगीफलं तांबूलं च । ऋग्यजुः-साममंत्रात्मा सर्वरूपी परात्परः । अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥१५॥ इति दक्षिणा । ततः कर्पूरेण नीराजनम् ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले । अन्तः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥१६॥ इति पुष्पांजलिम् । यानि कानि च पापानि जन्मांतरकृतानि च । तानि सर्वाणि नश्यंति प्रदक्षिणपदे पदे ॥ १७ ॥ इति सप्तप्रदक्षिणाः । एवं षोडशोपचारैः संपूज्य प्रणमेत् । इत्यश्वत्थपूजनम् ।

---

१ सर्वदेवपूजासु वाजसनेयिनां षोडशोपचारपूजाक्रमश्चेत्थमवसेयः—सहस्रशीर्षेत्यावाहनम् ( १ ) पुरुष एवेदमित्यासनम् ( २ ) एतावानस्येति पाद्यम् ( ३ ) त्रिपादूर्ध्वमित्यर्घ्यम् ( ४ ) ततो विराडजायतेत्याचमनीयम् ( ५ ) तस्माद्यज्ञादिति स्नानम् ( ६ ) तस्माद्यज्ञात्सर्वहुत इति वस्त्रम् ( ७ ) तस्मादश्वा इति यज्ञोपवीतम् ( ८ ) तं यज्ञमिति गन्धम् ( ९ ) यत्पुरुषमिति पुष्पम् ( १० ) ब्राह्मणोऽस्येति धूपम् ( ११ ) चन्द्रमामनस इति दीपम् ( १२ ) नाभ्या आसीदिति नैवेद्यम् ( १३ ) यत्पुरुषेणेति दक्षिणायुक्तताम्बूलम् ( १४ ) सप्तास्या इति आरार्तिकपूर्वकप्रदक्षिणाः ( १५ ) यज्ञेन यज्ञमिति मन्त्रपुष्पयुक्तो नमस्कारः ( १६ ) एष एव सर्वत्र विधिरूहनीयः । यत्र क्वचन देवपूजा भवति उपचारद्रव्याभावप्रतिनिधिस्तन्त्रान्तरे—"द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः" ।

# अथ मंगलव्रतविधानम् ।

( मन्त्रमहोदधौ )

मार्गशीर्षे वैशाखे वा शुद्धपक्षे प्रथमे मंगले व्रतारंभः । तत्र अरुणोदय उत्थाय आवश्यकं कृत्वा हस्तपादप्रक्षालनं कृत्वा अपामार्गसमिधा मौनेन दंतधावनं कृत्वा मौनव्रती नद्यादिजले स्नात्वा रक्तवस्त्रद्वयं धृत्वा नैवेद्यपुष्पचंदनानि संपाद्य विधिज्ञं ब्राह्मणम् आहूय तदाज्ञया भौमं पूजयेत् ॥ ॐ अद्येत्यादि अमुकगोत्रामुकनामाहं चिरंजीविगुणवत्पुत्रप्राप्तये मंगलव्रतं तदंगं पूजनं च करिष्ये इति संकल्प्य गणपतिपूजनं स्वस्तिवाचनं मातृकापूजनं कृत्वा मंगलं पूजयेत् ॥ तदादौ न्यासः । ॐ मंगलाय नमः अंगयोः । ॐ भूमिपुत्राय नमः जानुनोः । ॐ ऋणहर्त्रे नमः ऊर्वोः । ॐ धनप्रदाय नमः कट्योः । ॐ स्थिरासनाय नमः गुह्ये । ॐ महाकायाय नमः उरसि । ॐ सर्वकर्मविरोधकाय नमः वामबाहौ । ॐ लोहताय नमः दक्षिबाहौ । ॐलोहिताक्षाय नमः गले । ॐसामगानां कृपाकराय नमः मुखे । ॐधरात्मजाय नमः नासिकयोः । ॐकुजाय नमः अक्ष्णोः । ॐ भौमाय नमः ललाटे । ॐभूतिदाय नमः भ्रुवोः

काभ्यां नमः ॥ खं कनिष्ठिकाभ्यां नमः ॥ ॐ खः करतल-करपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ॐ हृदयाय नमः ॥ ह्रां शिरसे स्वाहा ॥ हं शिखायै वषट् ॥ सः कवचाय हुं ॥ खं नेत्रत्रयाय वौषट् ॥ खः अस्त्रायफट् ॥ इति हृदयादि-न्यासः ॥ एवं न्यासं कृत्वा ॥ "जपाभ शिवस्वेदजं हस्त-पद्मैर्गदाशूलशक्तीर्वरं धारयन्तम् ॥ अवन्तीसमुत्थं सुमेषा-सनस्थं धरानन्दनं रक्तवस्त्रं समीडे ॥" इति ध्यात्वा मान-सोपचारैः सम्पूज्य यथाशक्ति ( एकमालां ) मूलमन्त्रं जपित्वा ॥ "गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धि-र्भवतु मे देव त्वत्प्रसादात्त्वयि स्थितिः ॥" इति मन्त्रेण जपं निवेद्य बाह्यपूजामारभेत । तथाहि पीठे मं मंडूकाय नमः ॥ कां कालाग्निरुद्राय नमः ॥ आं आधारशक्तये नमः ॥ कूं कूर्म्माय नमः ॥ पृं पृथिव्यै नमः ॥ सुं सुधासमुद्राय नमः । श्वें श्वेतद्वीपाय नमः ॥ कं कल्पद्रुमाय नमः ॥ मं मणिहर्म्म्याय नमः ॥ हें हेमपीठाय नमः ( पूर्वादिषु ) धं धर्माय नमः ॥ ज्ञां ज्ञानाय नमः ॥ वैं वैराग्याय नमः ॥ ऐं ऐश्वर्याय नमः ॥ ( आग्नेय्यादिषु ) अं अधर्म्माय नमः ॥ अं अज्ञानाय नमः ॥ अं अवैराग्याय नमः ॥ अं अनै-श्वर्याय नमः ॥ (मध्ये) अं अनंताय नमः ॥ तं तत्त्वपद्माय नमः ॥ आं आनंदकन्दाय नमः ॥ सं संविन्नालाय नमः ॥ विं

विकारमयकेशरेभ्यो नमः ॥ पं प्रकृत्यात्मकपत्रेभ्यो नमः॥ पं पंचाशद्वर्णात्मककर्णिकायै नमः ॥ सूं सूर्यमण्डलाय नमः ॥ इं इंदुमंडलाय नमः ॥ पां पावकमंडलाय नमः ॥ सं सत्त्वाय नमः ॥ रं रंजसे नमः ॥ तं तमसे नमः ॥ अं अंतरात्मने नमः ॥ पं परमात्मने नमः ॥ ज्ञां ज्ञानात्मने नमः ॥ मां मायातत्त्वाय नमः ॥ कं कलातत्त्वायनमः ॥ विं विद्यातत्त्वाय नमः ॥ पं परतत्त्वाय नमः ॥ इति पीठदेवताः संपूज्य ॥ वामायै नमः ॥ ज्येष्ठायै नमः ॥ रौद्र्यै नमः ॥ काल्यै नमः ॥ कलविकारिण्यै नमः ॥ बलविकारिण्यै नमः॥ बलप्रमाथिन्यै नमः ॥ सर्वभूतदमिन्यै नमः ॥ मनोन्मनन्यै नमः ॥ इति नवपीठशक्तीःपूर्वाद्यष्टदिक्षु मध्ये च संपूज्य मूलमंत्रेण भौममावाहनस्थापनाऽऽसनसन्निधापनसन्निरोधनसम्मुखीकरणशकलीकरणाऽवगुंठनाऽमृतीकरणपरमीकरणस्वागतसुस्वागतपाद्याऽर्घ्याऽऽचमनमधुपर्कस्नानयज्ञोपवीतवस्त्रगंधपुष्पैः सम्पूज्य आवरणपूजां कुर्यात्(आग्नेय्यादिषु दिक्षु) ॐ हृदयाय नमः ॐ हां शिरसे स्वाहा । ॐ हं शिखायै वषट् । ॐ सः कवचाय हुम् ॥ ॐ खं नेत्रत्राय वौषट् ॥ ॐ खः अस्त्राय फट् ॥ इत्यंगानि संपूज्य ॥ "अभीष्टसिद्धिं मे देहि शरणगतवत्सल ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ १ ॥" इति मंत्रेण निवेद्य

तद्वाह्ये त्रिकोणे ( एकविंशतिकोष्ठेषु ) ॐ मंगलाय नमः ॥ १ ॥ ॐ भूमिपुत्राय नमः २ ॥ ॐ ऋणहर्त्रे नमः ३ ॥ ॐ धनप्रदाय नमः ४ ॥ ॐ स्थिरासनाय नमः ५ ॥ ॐ महाकायाय नमः ६ ॥ ॐ सर्वकर्म्मावरोधकाय नमः ७ ॥ ॐ लोहिताय नमः ८ ॥ ॐ लोहिताक्षाय नमः ९ ॥ ॐ सामगानां कृपाकराय नमः १०॥ ॐ धरात्मजाय नमः ११॥ ॐ कुजाय नमः १२॥ ॐ भौमाय नमः १३॥ ॐ भूतिदाय नमः १४॥ ॐ भूमिनंदनाय नमः १५॥ ॐ अंगारकाय नमः १६॥ ॐ यमाय नमः १७ ॥ ॐ सर्वरोगापहारकाय नमः १८ ॥ ॐ वृष्टिकर्त्रे नमः १९ ॥ ॐ वृष्टिहर्त्रे नमः २० ॥ ॐ सर्वकामफलप्रदाय नमः २१ ॥ इति नाममन्त्रैर्मंगलादीन् संपूज्य अभीष्टसिद्धिमिति मन्त्रेण द्वितीयावरणं निवेद्य ततश्चतुरस्रे भूपुरे ( यथार्थपूर्वादिषु ) ॐ इं इन्द्राय नमः । ॐ अं अग्नये नमः । ॐ यं यमाय नमः ॥ ॐ निं निर्ऋतये नमः । ॐ वं वरुणाय नमः । ॐ वां वायवे नमः । ॐ सों सोमाय नमः । ॐ ईं ईशानाय नमः । ऊर्ध्वं ॐ ब्रं ब्रह्मणे नमः । अधः ॐ अं अनन्ताय नमः ॥ इतीन्द्रादीन् संपूज्य ॥ "अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ३ ॥" इति मन्त्रेण तृतीयावरणं निवेद्य ॥ तद्बहिः ॐ वज्राय नमः । ॐ शक्तये नमः । ॐ दंडाय

नमः । ॐ खड्गाय नमः । ॐ पाशाय नमः । ॐ अंकुशाय नमः । ॐ गदायै नमः ॥ ॐ त्रिशूलाय नमः । ॐ पद्माय नमः ॥ ॐ चक्राय नमः ॥ इति वज्रादीन् संपूज्य "अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या सपर्यये तुभ्यं चतुर्थावरणार्चनम् ४॥" इति मन्त्रेण चतुर्थावरणं निवेद्य मूलमंत्रेण भौमाय सांगाय सावरणाय सशक्तिकाय धूपं दीपं नैवद्यमारार्त्तिके निवेद्य यथाशक्ति मंत्रं जपेत् । जपांते "गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थितिः" ॥ इति मंत्रेण देवदक्षकरे निवेदयेत् ॥ अस्य पुरश्चरणं षड्लक्षं जपः ॥ तद्दशांशेन खदिरकाष्ठेन होमः ॥ तद्दशांशेन ॐ भौमं तर्पयामि नमः ) इति मन्त्रेण तर्पणम् ॥ तद्दशांशेन ( ॐ भौमं मार्जयामि नमः ) इति मन्त्रेण मार्जनम् ॥ तद्दशांशन ब्राह्मणभोजनम् ॥ इत्थं मन्त्रे सिद्धे स्वेष्टप्रयोगान् कुर्यात् ॥ इति भौममन्त्रविधानम् ॥

॥ श्रीः ॥

# अथ मंगलव्रतविधिः ।

तत्र आदौ मंगलमन्त्रविधानम् ॥ (मंत्रो यथा) ॐ ह्रां ह्रं सः ख्वं ख्वः इति षडक्षरो मन्त्रः । अस्य श्रीमंगलषडक्षरमन्त्रस्य विरूपाक्ष ऋषिः, गायत्री छन्दः, धरात्मजो देवता, ह्रां बीजम्, ह्रं शक्तिः, चिरजीविगुणवत्पुत्रप्राप्तये जपे विनियोगः ॥ ॐ विरूपाक्षऋषये नमः शिरसि ॥ गायत्रीछन्दसे नमो मुखे ॥ श्रीधरात्मजदेवतायै नमो हृदि ॥ ह्रां बीजाय नमो गुह्ये ॥ ह्रं शक्तये नमः पादयोः ॥ विनियोगाय नमः सर्वांगे ॥ इति ऋष्यादिन्यासः ॥ ॐ अंगुष्ठाभ्यां नमः । ह्रां तर्जनीभ्यां नमः ॥ ह्रं मध्यमाभ्यां नमः ॥ सः अनामि-

---

१ देवलः—असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् । उपवासः प्रदुष्येत्तु दिवा स्वापाच्च मैथुनात् ॥ अशक्तौ तु मदनरत्ने देवलः—"अत्यये चाम्बुपानेन नोपवासः प्रणश्यति ।" अत्यये=कष्टे । विष्णुरहस्ये—'गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतम् ॥ एषु प्रायश्चित्तमुक्तम् ऋग्विधाने—"स्तेनहिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनम् । प्रायश्चित्तं व्रती कुर्याज्जपेन्नाम शतत्रयम् ॥ मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे । अष्टाक्षरं जपेन्मन्त्रं शतमष्टोत्तरं शुचिः ॥ "ॐ नमो नारायणाय" इत्यष्टाक्षरः । हेमाद्रौ वसिष्ठः—"उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् ।"

मध्ये । ॐ भूमिनन्दनाय नमः मस्तके । ॐ अंगारकाय नमः शिखायाम् । ॐ यमाय नमः सर्वांगे । ॐ सर्वरोगापहारकाय नमः बाहुद्वये । ॐ वृष्टिकर्त्रे नमः मूर्द्धादिपादपर्यन्तम् । ॐ वृष्टिहर्त्रे नमः पादादिमूर्द्धान्तम् । ॐ सर्वकामफलप्रदाय नमः दिक्षु । ॐ आराय नमः नाभौ । ॐ वक्राय नमः वक्षसि । ॐ भूमिजाय नमः मूर्द्धनि । एवं न्यासं कृत्वा ध्यायेत् ॥ " रक्तमाल्यांबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ १ ॥ ततः ॐ मंगलाय नमः इति मन्त्रेण मंगलं पूर्वोक्तविधिना आवाहनस्थापनाऽऽसनपाद्याऽर्घ्याऽऽचमनीयस्नानवस्त्रगंधपुष्पैः पूजयित्वा " ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैंह्रैंह्रैं कवचाय हुं । ॐ ह्रंसः नेत्रत्रयाय वौषट् । ॐ खखः अस्त्राय फट् " इति षडंगानि संपूज्य अभीष्टसिद्धिमिति मन्त्रेण प्रथमावरणं निवेद्य ( एकविंशतिकोष्ठेषु ) "ॐ मंगलाय नमः पादौ पूजयामि १ ॥

---

१ आदौ ओंकारः अन्ते च नमःशब्दोच्चारणेन मन्त्रो निष्पन्नो भवति, यथा " ॐ मंगलाय नमः " यथोक्तम्—"ॐकारादिषु संयुक्तं नमस्कारान्तकीर्तितम् । स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते॥" गारुडे— 'प्रणवादिनमोऽन्तं च चतुर्थ्यन्तं च सत्तम । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः ॥" प्रणवादि= ओंकारादि, नमोऽन्तं=नमःशब्दान्तम् । एवंभूतं देवतायाः चतुर्थ्यन्तं नाम । 'ॐ मङ्गलाय नमः ' इत्यादिकं मूलमन्त्र इत्युच्यते।

ॐ भूमिपुत्राय नमः जानुनी पू० २ ॥ ॐ ऋणहर्त्रे नमः ऊरू० ३ ॥ ॐ धनप्रदाय नमः कटी० ४ ॥ ॐ स्थिरासनाय नमः गुह्यं० ५॥ ॐ महाकायाय नमः उरः पू० ६॥ ॐ सर्वकर्म्मावरोधकाय नमः वामबाहुं० ७॥ ॐ लोहिताय नमः दक्षिणबाहुं० ८ ॥ ॐ लोहिताक्षाय नमः कंठं पू० ९ ॥ ॐ सामगानां कृपाकराय नमः मुखं० १० ॥ ॐ धरात्मजाय नमः नासिकां० ११ ॥ ॐ कुजाय नमः नेत्रद्वयं० १२ ॥ ॐ भौमाय नमः ललाटं० १३॥ ॐ भूतिदाय नमः भ्रुवोर्मध्ये० १४ ॥ ॐ भूमिनंदनाय नमः मस्तकं० १५ ॥ ॐ अंगारकाय नमः शिखां० १६ ॥ ॐ यमाय नमः सर्वांगं० १७॥ ॐ सर्वरोगापहारकाय नमः बाहुद्वयं० १८॥ ॐ वृष्टिकर्त्रे नमः मूर्द्धादिपादपर्यन्तं० १९॥ ॐ वृष्टिहर्त्रे नमः चरणादिमस्तकांतं० २० ॥ ॐ सर्वकामफलप्रदाय नमः दिशः पू० २१॥" इति नामभिः संपूज्य । अभीष्टसिद्धिमिति मन्त्रेण द्वितीयावरणं निवेद्य (त्रिकोणेषु) ॐ वक्राय नमः । ॐ आराय नमः । ॐ भूमिजाय नमः (एतान् संपूज्य) "अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्" इति निवेद्य तद्बहिः ॐ ब्राह्म्यै नमः ॥ ॐ माहेश्वर्यै नमः ॥ ॐ कौमार्यै नमः ॥ ॐ वैष्णव्यै नमः ॥ ॐ वाराह्यै नमः ॥ ॐ इन्द्राण्यै नमः ॥ ॐ चामुण्डायै

नमः ॥ ॐ महालक्ष्म्यै नमः ( एताः संपूज्य ) " अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्" इति निवेद्य तद्वाह्ये ॥ ॐ इन्द्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ सोमाय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ॐ ब्रह्मणे नमः ॥ ९ ॥ ॐ अनन्ताय नमः ॥ १० ॥ ( इत्येतान् संपूज्य ) "अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम्" इति निवेद्य तद्वाह्ये ॥ ॐ वज्राय नमः ॥ ॐ शक्तये नमः ॥ ॐ दण्डाय नमः ॥ ॐ पाशाय नमः ॥ ॐ अंकुशाय नमः । ॐ गदायै नमः ॥ ॐ त्रिशूलाय नमः । ॐ पद्माय नमः । ॐ चक्राय नमः । "अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं सुषष्ठावरणार्चनम्" इति निवेद्य । मंगलाय सांगाय सपरिवाराय धूपं दीपं समर्प्य गोधूमान्नं ( चूर्मा ) निवेद्य जलपूर्णताम्रपात्रे रक्तचन्दनरक्तपुष्पाक्षतफलानि निःक्षिप्य जानुभ्यामवनीं गत्वा "ॐभूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ॥ श्रेयोऽर्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तु ते १ ॥ रक्तप्रवालसंकाश जपाकुसुमसन्निभ ॥ महीसुत महाबाहो गृहाणार्घ्यं नमोऽस्तु

ते ॥ २ ॥" इत्यर्घ्यं निवेद्य ॥ पूर्वोक्तैरेकविंशतिनामभिः प्रणम्य एकविंशतिप्रदक्षिणाः कृत्वा प्रणमेत् । ततः खदिरांगारकेण स्वपुरतः ऋणरेखात्रयं समं कृत्वा वामपादेन प्रमार्जयेत् । तत्र मंत्रौ- "दुःखदौर्भाग्यनाशाय पुत्रसन्तानहेतवे ॥ कृतं रेखात्रयं वामपादेन तत्प्रमार्ज्म्यहम् ॥ १ ॥ ऋणदुःखविनाशाय मनोऽभीष्टार्थसिद्धये ॥ मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः ॥ २ ॥" ततः पुष्पांजलिं गृहीत्वा प्रार्थयेत् ॥ धरणीगर्भसंभूतं विद्युत्तेजःसमप्रभम् ॥ कुमारं शक्तिहस्तं च मंगलं प्रणमाम्यहम् ॥ १ ॥ ऋणहर्त्रे नमस्तुभ्यं दुःखदारिद्र्यनाशिने ॥ नमामि द्योतमानाय सर्वकल्याणकारिणे ॥ २ ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः ॥ सुखं यान्ति यतस्तस्मै नमो धरणिसूनवे ॥३॥ यो वक्रगतिमापन्नो नृणां विघ्नं प्रयच्छति ॥ पूजितः सुखसौभाग्यं तस्मै क्ष्मासूनवे नमः ॥ ४ ॥ प्रसादं कुरु मे नाथ मंगलप्रद मंगल ॥ मेषवाहन रुद्रात्मन् पुत्रान्देहि धनं यशः ॥ ५ ॥" इत्यादि प्रार्थ्य पुष्पांजलिं दद्यात् । ततः पूजायां निवेदितान्नेन एकभक्तव्रतं कुर्यात् । एवं संवत्सरावधिव्रतं कृत्वा अंते उद्यापनं कृत्वा पंचाशद्ब्राह्मणान् भोजयेत् ॥ एवं व्रतपरा नारी प्राप्नुयात्सुभगान् सुतान् ॥ धनाप्त्यै ऋणनाशाय व्रतं कुर्यात् पुमानपि ॥१॥

इति मंत्रमहोदधौ पंचदशे तरंगे मंगलव्रतविधिः ॥

अथ नवरात्रे घटस्थापनादिप्रयोगः ॥ प्रतिपदि प्रातः कृताभ्यंगस्नानः कुंकुमचंदनादिना कृतपुंड्रो धृतपवित्रः सपत्नीको दशघटिकामध्येऽभिजिन्मुहूर्त्ते वा कलशस्थापनार्थं शुद्धमृदा वेदिकां कृत्वा पञ्चपल्लवदूर्वाफलताम्बूलकुंकुमपुष्पधूपादिसंभारान् संपादयेत् ॥ ततो देशकालौ संकीर्त्य ममेह जन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकं दीर्घायुर्विपुलधनपुत्रपौत्राद्यविच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयप्रमुखचतुर्विधपुरुषार्थसिद्ध्यर्थम् अद्य शारदीयनवरात्रे प्रतिपदि विहितं कलशस्थापनं दुर्गापूजां चंडीसप्तशतीपाठं कुमारीपूजाद्युत्सवाख्यं कर्म करिष्ये ॥ तत्र निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं पुण्याहवाचनं चंडीसप्तशतीजपाद्यर्थं ब्राह्मणवरणं च करिष्ये इति संकल्प्य ॐसुमुखश्चेत्यादि

---

१ तत्र परविद्धा ग्राह्या । तदुक्तं **गोविन्दार्णवे मार्कण्डेयदेवीपुराणयोः**—"पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता ॥ देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते ॥ नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम् ॥" तथा **देवीपुराणे**—"न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने । उदये द्विमुहूर्तापि ग्राह्या सौंदर्यकारिणी ॥" यदा पूर्वदिने संपूर्णा शुद्धा भूत्वा परदिने वर्धते च तदा संपूर्णत्वादमायोगाभावाच्च पूर्वैव । यानि तु द्वितीयायोगनिषेधपराणि वचनानि श्रुतानि तानि शुद्धाधिकनिषेधपराण्येव । परदिने प्रतिपदसत्त्वे तु अमायुक्तापि ग्राह्या । तदाह **लल्लः**—"तिथिः शरीरं तिथिरेव कारणं तिथिः प्रमाणं तिथिरेव साधनम्" इति यानि यानि त्वमायुक्ता प्रकर्तव्येति **नृसिंहप्रसादो**दाहृतवचनानि, तान्यप्येतद्विषयाण्येवेति **व्रतराजे श्रीविश्वनाथः** ।

स्मृत्वा गणेशपूजनं विधाय पुण्याहवचनं कुर्यात् ॥ ततो गंधपुष्पवस्त्रां-गुलीयकमादाय देशकालौ संकीर्त्य ॐ अद्य शरत्कालिकदुर्गापूज-नपूर्वकमार्कंडेयपुराणीयचंडीसप्तशतीपाठकरणार्थममुकगोत्रममुक-शर्माणं ब्राह्मणं त्वामहं वृणे ॥ ॐ वृतोऽस्मीति प्रतिवचनम् ॥ इति ब्राह्मणं वृत्वा गंधादिभिः पूजयेत् ॥ ततो विप्रः ॐ भूरसिभूमिर-सीति भूमिं स्पृष्ट्वा ॐ भूरसिभूमिरस्यदितिरसिविश्वधाया-विश्वस्यभुवनस्य धर्त्री ॥ पृथिवींयच्छपृथिवींदृर्ठ्ंहपृथिवीं माहि ठंं सीः ॥ १ ॥ तस्यां भुव्यंकुरारोपणार्थं शुद्धमृदं प्रक्षि-प्य । तत्र ॐ धान्यमसिधिनुहि इति यवान्निक्षिप्य ॐ धा-न्यमसि धिनुहिदेवान् प्राणायत्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवो वः सविता हिरण्य-पाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीना-म्पयोसि ॥ २ ॥ ॐ आजिघ्रकुलशंमिति कुंभं संस्थाप्य ॥ ॐ आजिघ्र कलशं मह्या त्वा विशंत्विन्दवः ॥ पुनरूर्जा-निवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्माविशता-द्रयिः ॥ ३ ॥ ॐ व्वरुणस्योत्त० इति जलेनापूर्य ॥ ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्य स्कम्भसर्ज्जनी स्त्थो व्वरु-णस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽ-ऋतसदनमासीद ॥ ४ ॥ गंधद्वारामिति गंधम् ॥ ॐ गंध-

द्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥५॥ ॐ याऽओषधीरिति सर्वौषधीः ॥ ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहर्ठ॑शतन्धामानिसप्तच ॥ ६ ॥ ॐ काण्डात्काण्डादिति दूर्वाः ॥ ॐ अश्वत्थेवं इति पंचपल्लवान् ॥ ॐ अश्वत्थेवोनिषदनम्पर्णेवोव्वसातेष्कृता ॥ गोभाजऽइत्किलासथसत्सनवथपूरुषम् ॥ ७ ॥ ॐ स्योनापृथिवीति सप्त मृदः ॥ ॐ स्योनापृथिवी नोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ ८ ॥ ॐ याः फलिनीरिति पूगीफलम् ॥ ॐ परिवाजपतिरिति पंचरत्नानि ॥ ॐ परिवाजपतिः कविरग्निर्हव्व्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥९॥ ॐ हिरण्यगर्भेति हिरण्यं च क्षिप्त्वा ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे

---

छन्दोगपरिशिष्टे—"कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् । वचा चम्पकमुस्तं च सर्वौषध्यो दश स्मृताः ॥ २ हेमाद्रौ ब्रह्माण्डपुराणे—"अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चभङ्गा इति ख्याताः सर्वकर्मसु शोभनाः ॥" पञ्चभंगाः=पञ्चपल्लवाः । ३ मात्स्ये—"गजाश्वरथवल्मीकसंगमाद्ध्रदगोकुलात् । मृदमानीय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा ॥" गोकुलावधिसप्तचत्वरेण सहाष्टौ मृदो भवन्ति । संगमः=नदीसंगमः । ४ धन्वन्तरीयनिघण्टौ—"नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः ॥"

भूतस्य जातः पतिरेकऽआसात् ॥ सदाधार पृथिवी द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १० ॥ ॐ व्वसोः पवित्रमसीति रक्तवस्त्रेणावेष्ट्य ॥ ॐ व्वसोःपवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारदेवस्त्वा सविता पुनातु ॥ व्वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः ॥ ११ ॥ ॐ पूर्णा दर्वीति तण्डुलपूर्णपात्रं निधाय ॥ ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽइषमूर्जंशतक्रतो ॥ १२ ॥ तत्र ॐ तत्त्वायामीति वरुणमावाह्य संपूज्य ॥ ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो व्वरुणेह बोध्युरुशंसमानऽआयुः प्रमोषीः ॥१॥ "कलशस्य मुखे विष्णुः" इत्यभिमंत्र्य "देवदानवसंवादे" इत्यादि प्रार्थयेत् ॥ ततः कलशोपरि स्वर्णमयीं दुर्गाप्रतिमाम् अग्न्युत्तारपूर्वकं पंचामृतेन स्नापयित्वा संस्थापयेत् ॥

अथ पूजा ॥ देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्माहं मम (यजमानस्य वा) अतुलविभूतिकामः संवत्सरसुखप्राप्तिकामः श्रीदुर्गापूजनं करिष्य इति संकल्प्य ॥ "जयन्ती मगला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वाहा

१ "पञ्चामृतं दधि क्षीरं सिता मधु घृतं स्मृतम्" इति हेमाद्रौ शिवधर्मे।

स्वधा नमोऽस्तु ते ॥ १ ॥ आगच्छ वरदे देवि दैत्यदर्प-
निषूदनि ॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये ॥२॥"
इत्यावाह्य श्रीसूक्तेन आसनादिषोडशोपचारैः संपूजयेत् ॥ (श्रीसू-
क्तन्तु लक्ष्मीपूजान्त द्रष्टव्यम् ) ततः प्रार्थना ॥ मंत्रहीन क्रि-
याहीनं० ॥१॥ महिषघ्नि महामाये चामुंडे मुंडमालिनि ॥
यशो देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ इत्यादि प्रार्थ्य
चंडीपाठ कुर्यात् ॥ तत्रादौ देशकालो संकीर्त्य मम यजमानस्य
वा ) अतुलविभूतिकामः श्रीदुर्गाप्रीत्यर्थं कवचार्गलाकीलकसहितं
मार्कंडेयपुराणीयम् ॐ सावर्णिः सूर्यतनय इत्यादि सावर्णिर्भ-
वितामनुरित्यंतं देवीमाहात्म्यपाठं करिष्ये इति संकल्प्य आस-
नादि विधाय आधारे अन्यहस्तलिखितं पुस्तकं स्थापयित्वा
नारायणं नमस्कृत्य प्रणवमुच्चार्य ग्रंथार्थं बुध्यमानः स्पष्टाक्षरं
नातिशीघ्रं नातिमंदं रसभावस्वरयुतं वाचयेत् ॥ अध्यायं समाप्य
विरमेन्न तु मध्य ॥ ततः कुमारीपूजनं पारणादिने कूष्मांडब-
लिदान च कुर्यात् ॥ इति नवरात्रविधानं समाप्तम् ॥

---

१ प्रारम्भोत्तरं सूतकप्राप्तावाह—"सूतके पूजनं प्रोक्तं जपदानं विशेषतः । देवी-
मुद्दिश्य कर्तव्य तत्र दोषो न विद्यते ॥ " इति अनारब्धे त्वन्येन कारयेत् । रज-
स्वला तु ब्राह्मणैः पूजादिकं कारयेत् । सूतकवद्विशेषवचनाभावात् । सभर्तृकस्त्रीणां
नवरात्रे गन्धादिसेवनं न दोषाय । तदुक्तं हेमाद्रौ गारुडे—गन्धालंकारताम्बूल-
पुष्पमालानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥ "

अथ देव्या आर्तिक्यम् ॥ प्रवरातीरनिवासिनि निगमप्रतिपाद्ये ॥ पारावाऽरविहारिणि नारायणिहृद्ये ॥ प्रपञ्चसारे जगदाधारे श्रीविद्ये ॥ प्रपन्नपालननिरते मुनिवृंदाराध्ये ॥ जय देवी जय देवी जय मोहिनिरूपे ॥ मामिह जननि समुद्धर पतितं भवकूपे ॥ १ ॥ दिव्यसुधाकरवदने कुन्दोज्ज्वलरदने ॥ पदनखनिर्जितमदने मधुकैटभकदने ॥ विकसितपंकजनयने पन्नगपतिशयने ॥ खगपतिवहने गहने संकटवनदहने ॥ जय देवी० ॥ २ ॥ मंजीरांकितचरणे मणिमुक्ताभरणे ॥ कंचुकिवस्त्राभरणे वक्रांबुजधरणे ॥ शंकामयभयहरणे भूसुरसुखकरणे ॥ करुणां कुरु मे शरणे गजनक्रोद्धरणे ॥ जय देवी० ॥ ३ ॥ छित्त्वा राहुग्रीवां पासि त्वं विबुधान् ॥ ( द्विड्भ्यो ) यच्छसि मृत्युमनिष्टं पीयूषं विबुधान् ॥ विहरसि दानव-ऋद्धां समरे ससिद्धाम् ॥ मध्वमुनीश्वरवरदे पालय संसिद्धाम् ॥ जय देवी जय देवी जय मोहिनिरूपे ॥ मामिह जननि समुद्धर पतितं भवकूपे ॥ ४ ॥ इति देव्या आर्तिक्यं समाप्तम् ॥

अथ महालक्ष्मीपूजनम् ॥ आचम्य प्राणानायम्य ॐ तत्सदद्योमिति पठित्वा ॥ अमुकगोत्रोऽमुकशर्माहं स्थिरलक्ष्मीप्राप्तिद्वारा श्रीमहालक्ष्मीप्रीत्यर्थं गणपतिनवग्रहकलशपूजनपूर्वकं श्रीमहालक्ष्मीपूजनमहं करिष्य इति संकल्प्य सुमुखश्चैकदंतश्च

इत्यादिस्मरणपूर्वकं गणपत्यादिपूजनं कुर्यात् ॥ अथ ध्यानम् ॥
" या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गंभीरावर्त्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥ या
लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुंभैः सा
नित्यं पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥ १ ॥"
इति ध्यात्वा ॥ ॐ सर्वलोकस्य जननीं शूलहस्तां त्रिलोच-
नाम् ॥ सर्वदेवमयीमीशां देवीमावाहयाम्यहम् ॥ २ ॥ ॐ
महालक्ष्म्यै नमः आवाहनं समर्पयामि ॥ ॐ तप्तकांचनवर्णा-
भं मुक्तामणिविराजितम् ॥ अमलं कमलं दिव्यमासनं प्रति-
गृह्यताम् ॥ ३ ॥ ॐ महालक्ष्म्यै नमः आसनं० ॥ ॐ गंगा-
दितीर्थसंभूतं गंधपुष्पादिभिर्युतम् ॥ पाद्यं ददाम्यहं देवि
गृहाणाशु नमोऽस्तु ते ॥४॥ ॐ महालक्ष्म्यै नमः पाद्यम् ॥
ॐ अष्टगन्धसमायुक्तं स्वर्णपात्रप्रपूरितम् ॥ अर्घ्यं गृहाण
मद्दत्तं महालक्ष्म्यै नमोऽस्तु ते ॥ ५ ॥ ॐ महा० अर्घ्यम् ।
ॐ सर्वलोकस्य या शक्तिर्ब्रह्मविष्ण्वादिभिः स्तुता ॥ ददा-
म्याचमनं तस्यै महाकाल्यै मनोहरम् ॥ ६ ॥ ॐ महा०
आचमनं स० ॥ ॐ पंचामृतसमायुक्तं जाह्नवीसलिलं शुभम् ॥
गृहाण विश्वजननि स्नानार्थं भक्तवत्सले ॥ ७ ॥ स्नानं० ।
ॐ दिव्यांबर नूतनं हि क्षौमं त्वतिमनोहरम् ॥ दीयमानं
मया देवि गृहाण जगदंबिके ॥ ८ ॥ वस्त्रयुग्मं स० आच-

मनं च ॥ ॐ कापिलं दधिकुंदेंदुधवलं मधुसंयुतम् । स्वर्ण-पात्रस्थितं देवि मधुपर्कं गृहाण भोः ॥ ९ ॥ मधुपर्कं स० ॥ ॐ रत्नकंकणवैदूर्यमुक्ताहारादिकानि च ॥ सुप्रसन्नेन मनसा दत्तानि स्वीकुरुष्व भो॰ ॥ १० ॥ आभरणानि स० ॥ ॐ श्रीखंडागरुकर्पूरमृगनाभिसमन्वितम् । विलेपनं गृहाणाशु नमोऽस्तु भक्तवत्सले ॥ ११ ॥ गंधं स० ॥ रक्तचंदनसंमिश्रं पारिजातसमुद्भवम् ॥ मया दत्तं गृहाणाशु चंदनं गंधसंयुतम् ॥ १२ ॥ रक्तचंदनं स० ॥ ॐ सिंदूरं रक्तवर्णं च सिंदूरति-लकप्रिये । भक्त्या दत्तं मया देवि सिंदूरं प्रतिगृह्यताम् ॥ १३ ॥ सिंदूरं० ॥ ॐ कुंकुमं कामदं दिव्यं कुंकुमं कामरूपिणम् । अखंडकामसौभाग्यं कुंकुमं प्रतिगृह्यताम् ॥ १४ ॥ कुंकुमं० ॥ ॐ तैलानि च सुगंधीनि द्रव्याणि विविधानि च । मया दत्तानि लेपार्थं गृहाण परमेश्वरि ॥ १५ ॥ सुगंधतैलं० ॥ ॐ मंदारपारिजाताद्याः पाटली केतकी तथा । मरुवामो-गरं चैव गृहाणाशु नमोनमः ॥ १६ ॥ पुष्पाणि० ॥ ॐ विष्ण्वा-दिसर्वदेवानां प्रियां सर्वसुशोभनाम् । क्षीरसागरसंभूते दूर्वां स्वीकुरु सर्वदा ॥ १७ ॥ दूर्वां स० ॥ ॐ पद्मशंखजपापुष्पैः शतपत्रैर्विचित्रिताम् । पुष्पमालां प्रयच्छामि गृहाण त्वं सुरे-श्वरि ॥ १८ ॥ पुष्पमालां स० ॥ अथांगपूजा ॥ ॐ चपलायै नमः पादौ पूजयामि ॥ १ ॥ ॐ चंचलायै नमः जानुनी पू०

॥ २ ॥ ॐ कमलायै नमः कटिं पू० ॥ ३ ॥ ॐ कात्यायिन्यैन० नाभिं पू० ॥४॥ ॐ जगन्मात्रे न० जठरं पू० ॥५॥ ॐ विश्ववल्लभायैन० वक्षःस्थलं पू० ॥६॥ ॐ कमलवासिन्यै न० भुजौ पू० ॥ ७ ॥ ॐ पद्मकमलायै न० मुखं पू० ॥ ८ ॥ ॐ कमलपत्राक्ष्यै न० नेत्रत्रयं पू० ॥९॥ ॐ श्रियै नमः शिरः पू० ॥ १० ॥ इत्यंगपूजा ॥ अथ दूर्वादिक्रमेणाष्टदिक्ष्वष्टसिद्धीः पूजयेत् ॥ ॐ अणिम्ने नमः ॥ १ ॥ ॐ महिम्ने नमः ॥ २ ॥ ॐ गरिम्णे नमः ॥ ३ ॥ लघिम्ने नमः ॥ ४ ॥ ॐ प्राप्त्यै नमः ॥ ५ ॥ ॐ प्राकाम्यै नमः ॥ ६ ॥ ॐ ईशितायै नमः ॥ ७ ॥ ॐ वशितायै नमः ॥ ८ ॥ पुनः पूर्वादिक्रमेण ॥ ॐ आद्यलक्ष्म्यै न० ॥ १ ॥ ॐ विद्यालक्ष्म्यै नमः ॥२॥ ॐ सौभाग्यलक्ष्म्यै न० ॥ ३ ॥ ॐ अमृतलक्ष्म्यै न० ॥ ४ ॥ ॐ कामलक्ष्म्यै न० ॥ ५ ॥ ॐ सत्यलक्ष्म्यै न० ॥ ६ ॥ ॐ भोगलक्ष्म्यै न० ॥ ७ ॥ ॐ योगलक्ष्म्यै न० ॥ ८ ॥ इत्यष्टलक्ष्मीपूजनम् ॥

अथ मषीपात्रपूजनम् ॥ “ ॐ महाकाल्यै नमः ” इति मंत्रेण आवाहनादि कृत्वा गंधादिभिः संपूज्य आवरणपूजां कुर्यात् ॥ ॐ काल्यै नमः ॥ १ ॥ ॐ कपालिन्यै नमः ॥ २ ॥ ॐ फुल्लायै न० ॥ ३ ॥ ॐ कुरुकुलायै न० ॥ ४ ॥ ॐ विरो-

धिन्यै नमः ॥ ५ ॥ ॐ विप्रचित्तायै न० ॥ ६ ॥ ॐ उग्रप्रदत्तायै नमः ॥ ७ ॥ ॐ दिव्यायै नमः ॥ ८ ॥ ॐ निलायै नमः ॥ ९ ॥ ॐ घनायै न० ॥ १० ॥ ॐ बलाकायै न० ॥ ११ ॥ ॐ मात्रायै न० ॥ १२ ॥ ॐ मुदायै न० ॥ १३ ॥ इति पूजयेत् ॥ सरस्वती ( लेखनी ) पूजनम् ॥ "ॐ वीणापुस्तकधारिण्यै नमः" ॥ इत्यावाह्य गधादिभिः संपूजयेत् ॥ अथाचरणपूजा ॥ ॐ वाग्वत्यै नमः ॥ १ ॥ ॐ वाग्वादिन्यै न० ॥ २ ॥ ॐ अजितायै न० ॥ ३ ॥ ॐ विष्णुमायायै न० ॥ ४ ॥ ॐ हिंगुलायै न० ॥ ५ ॥ ॐ यन्त्रविद्यायै न० ॥ ६ ॥ ॐ सिद्धविद्यायै न० ॥ ७ ॥ ॐ प्रजायै न० ॥ ८ ॥ ॐ पद्मावत्य नमः ॥ ९ ॥ भुवनेश्वर्यै न० ॥ १० ॥ इति सरस्वतीपूजा ॥ ॐ वनस्पतिरसोत्पन्नो गंधाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १९ ॥ ॐ महालक्ष्म्यै नमः धूपं समर्पयामि ॥ कार्पासवर्तिसंयुक्तं घृतयुक्तं मनोहरम् ॥ तमोनाशकरं दीपं गृहाण परमेश्वरि ॥ २० ॥ दीपं स० ॥ ॐ नैवेद्यं गृह्यतां देवि भक्ष्यभोज्यसमन्वितम् । षड्रसैरन्वितं दिव्यं लक्ष्मि देवि नमोऽस्तु ते ॥ २१ ॥ नैवेद्यं० ॥ ॐ शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् ॥ आचम्यतां मम जलं प्रसीद त्वं महेश्वरि ॥ २२ ॥ आचमनं० ॥ ॐ एलालवंगकर्पूरनागपत्रादिभिर्युतम् ॥ पूगीफलेन संयुक्तं

तांबूलं प्रतिगृह्यताम् ॥ २३ ॥ तांबूलं समर्पयामि ॥ ॐ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ॥ आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥ २४ ॥ नीराजनं० ॥ ॐ फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ॥ तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः ॥ २५ ॥ फलं समर्पयामि ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ २६ ॥ ॐ महालक्ष्म्यै नमः दक्षिणां समर्पयामि ॥ ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ तानि तानि विनश्यंति प्रदक्षिणपदेपदे ॥ २७ ॥ प्रदक्षिणां समर्पयामि० ॥ ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ॥ यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ २८ ॥ नमस्कारं सम० ॥ ॐ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः ॥ पुष्पांजलिर्मया दत्तस्तव प्रीत्यै नमोऽस्तु ते ॥ २९ ॥ ॐ महालक्ष्म्यै नमः मंत्रपुष्पांजलिं समर्पयामि ॥ ॐ सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम् ॥ परावरं पातु वरं सुमंगलं नमामि भक्त्या तव कामसिद्धये ॥ ३० ॥ भवानि त्वं महालक्ष्मीः सर्वकामप्रदायिनी । सुपूजिता प्रसन्ना स्यान्महालक्ष्म्यै नमोऽस्तु ते ॥ ३१ ॥ इति प्रार्थना ॥

इति श्रीमहालक्ष्मीपूजनम् ॥ अथ लक्ष्मी ( श्री ) सूक्तम् ॥

ॐ हिरंण्यवर्णांहरिंणींसुवर्णरजतस्त्रंजाम् ॥ चंद्रांहिरण्मयीं
लक्ष्मीं जातंवेदोम् आवह ॥ १ ॥ तांमआवंहजातवेदोल-
क्ष्मीमनंपगामिनीम् ॥ यस्यांहिरंण्यंविन्देयंगामश्वंपुरुषान-
हम् ॥ २ ॥ अश्वपूर्वांरंथमध्यां हस्तिनांदप्रबोधिंनीम् । श्रियं
देवीमुपंह्वयेश्रीर्मादेवीजुंषताम् ॥ ३ ॥ कांसोस्मितांहिरंण्य-
प्राकारांमार्द्रां ज्वलंतींतृप्तांतर्प्पयंतीम् ॥ पद्मेस्थितांपद्मवंर्णां
तामिहोपंह्वयेश्रियंम् ॥ ४ ॥ चंद्रांप्रंभासांयशसाज्वलंतीं
श्रियंलोकेदेवजुंष्टामुदाराम् ॥ तांपद्मनेमींशरंणमहंप्रपंद्येअ-
लक्ष्मीर्मेंनश्यतांत्वांवृणे ॥ ५ ॥ आदित्यवंर्णेतपसोधिंजा-
तोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलांनितपसानुदंतु
मायांतंरायाश्चंबाह्याअलक्ष्मीः ॥ ६ ॥ उपैतुमांदेवसखः
कीर्तिश्चमणिंनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंद-
दातुमे ॥७॥ क्षुत्पिंपासामंलाज्येष्ठामलक्ष्मींनांशयाम्यहंम्॥
अभूंतिमसंमृद्धिंचसर्वां निर्णुदमगृहात् ॥ ८ ॥ गंधद्वारां
दुराधर्षांनित्यपुंष्टांकरीषिणींम् । ईश्वरींसर्वंभूतानांतामिहो-
पह्वयेश्रियम् ॥ ९ ॥ मनसः काममाकूतिंवाचः सत्यमशी-

महि ॥ पशूनांरूपमन्नस्य मयिश्रीः श्रयतांयशः ॥ १० ॥ कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम ॥ श्रियंवासयमेकुलेमातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजंतुस्निग्धानि चिक्लीतवसमेगृहे ॥ निचंदेवीमातरंश्रियंवासयमेकुले ॥ १२ ॥ आर्द्रांपुष्करिणींपुष्टींपिंगलांपद्ममालिनीम् ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोम आवह ॥ १३ ॥ आर्द्रांयः करिणींयष्टींसुवर्णाहेममालिनीम् ॥ सूर्यांहिरण्मयीं लक्ष्मीं जातवेदोम आवह ॥१४॥ तांमआवहजातवेदो लक्ष्मामनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतिंगावोदास्योऽश्वान् विंदेयंपुरुषानहम् ॥ १५ ॥ ॐ महादेवींचं विद्महेविष्णुपत्नींचं धीमाह ॥ तन्नोलक्ष्मीः प्रचोदयात् ॥ १६ ॥ यः शुचिः प्रयतोभूत्वाजुहुयांदाज्यमन्वहम् ॥ सूक्तंपंचदशर्चंचश्रीकामः सततंजपेत् ॥१७॥ इत्यथर्ववेदीयलक्ष्मी-( श्री ) सूक्तं समाप्तम् ॥

अथ श्रीशूद्रव्रात्यकर्तृकपुराणोक्तसर्वदेवपूजाप्रयोगः ॥

आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर । अरण्यामिव

---

१ यथा जीवति जाग्रति शरीरे एक एवात्मा शरीरीयभिन्नभिन्नावस्थया (चेष्टया) भिन्नभिन्नानि नामानि लभते, तथैव परमात्मापि जीवतो जाग्रतोऽस्य विश्वस्य-

हव्यांशं मूर्त्तावावाहयाम्यहम् ॥ १ ॥ अमुकदेवाय नमः आवाहनम् ॥ तवेयं महिमामूर्त्तिस्तस्यां त्वां सर्वगं प्रभो ॥ भक्तिस्नेहसमाकृष्टदीपवत्स्थापयाम्यहम् ॥ २ ॥ इति स्थापनम् ॥ देवदेव महाराज प्रियेश्वर प्रजापते । आसनं दिव्यमीशान दास्येऽहं परमेश्वर ॥३॥ इत्यासनम् ॥ यद्भक्तिलेशसंपर्कात्परमानंदविग्रहम् । तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ॥ ४ ॥ इति पाद्यम् ॥ तापत्रयहरं दिव्यं परमानंदलक्षणम् । तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥५॥ इत्यर्घ्यम् ॥ वेदानामपि वेद्याय देवानां देवतात्मने । आचामं कल्पयामीश शुद्धानां शुद्धिहेतवे ॥ ६ ॥ इत्याचमनीयम् ॥

---

—भिन्नभिन्नावस्थया भिन्नभिन्ननामानि प्राप्नोति । शरीरस्य जाग्रदवस्थया स आत्मा 'विश्व' इति नाम प्राप्नोति तस्य स्वप्नावस्थया 'तैजस' इत्यभिख्यां स लभते, तस्य सुषुप्त्या च 'प्राज्ञ' इति संज्ञां स प्राप्नोति, एवमेव विश्वस्य जाग्रदवस्थया स परमात्मा 'ब्रह्मा' इति ( विराट् ) स्वप्नावस्थया 'विष्णु' इति ( हिरण्यगर्भ ) सुषुप्त्यवस्थया च 'महेश' इति (सूत्रात्मा) इत्येवं भिन्नभिन्ननामानि लभते ॥ यथा वा चक्षुर्यदा पश्यति तदा द्रष्टा स आत्मा भवति, कर्णौ यदा शृणुतस्तदा श्रोता स भवति, इत्येवं भिन्नभिन्नानि लभते नामान्यात्मा, यद्यपि दर्शनश्रवणादयो धर्मा नात्मनः किन्त्विन्द्रियाणामेव, तथाप्यात्मसंबन्धादेव ते धर्मा व्यक्तीभवन्तीत्यात्मधर्मा इत्याख्यायन्ते, इतीन्द्रियाधिष्ठातृत्वात् स एव नाना नामानि लभते । एवमेव जीवतो जाग्रतोऽस्य समस्तस्य विश्वरूपशरीरस्येन्द्रियाणि सूर्यचन्द्रदिग्देवलोकादीनि यं कंचिद् धर्मं व्यक्तीकुर्वन्ति तं सर्वं परमात्माश्रयादेव कुर्वन्ति । किमुक्तम् ? सूर्यो यद् भासते तस्याश्रयादेव, अग्निर्यज्ज्वलति तदाश्रयादेव-

गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः । स्नापितोसि मया देव तथा शांतिं कुरुष्व मे ॥ ७ ॥ इति स्नानम् ॥ पयो दधि घृतं चैव मधुशर्करया युतम् । पञ्चामृतं मयानीत स्नानार्थं प्रतिगृह्यताम् ॥८॥ इति पञ्चामृतस्नानम् । पुनः शुद्धोदकस्नानं च ( तताऽभिषेकः ) सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ ९ ॥ इति वस्त्रद्वयमोचमन च ॥ नवभिस्तंतुभियुक्त त्रिगुण देवतामयम् ॥ उपवातं चोत्तरीय गृहाण परमेश्वर ॥ १० ॥ इति यज्ञोपवीतम् आचमन च ॥ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्य सुमनोहरम् । विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्य-

---

—किं बहुना, यत् किंचिद् भासनं प्रकाशनं च भवति तत्सर्वं तदाश्रयादव, नहि अन्तरण परमात्मदेवसत्तां किंचिदपि लब्धसत्ताकं भवितुमर्हति । " तस्य भासा सर्वमिदं विभाति"-( मुं० २।२।१० ) इति मुण्डकश्रुतः । तस्यव सत्तया सर्वमिदं लब्धसत्ताक भवतीति तदर्थात् । तत्सिद्धमतत्—परमात्मैव सर्वेषामेषामधिष्ठातृत्वाद् भिन्नभिन्नानि नामानि लभत इति । सूर्यो यदा तस्याश्रयण भासत तदा स एव 'सूर्यदेवता' इति नाम्नाऽभिभाष्यत, किमुक्तम् ? सूर्यस्य धर्मण स 'सूर्यदेवता' इति, अग्नेधर्मेण सः 'अग्निदेवता' इति, विद्युतो धर्मण च इन्द्रदेवता इति इत्येवं भिन्नभिन्नानि नामानि लभते स एव । तदित्थं परमात्मनः सत्तैव (दिव्यशक्तिरेव) यदाश्रयेण सर्वमिदं चराचरं जगत् लब्धसत्ताकं भवति परमाथतो देवताऽस्ति । भिन्नभिन्नरूपपु भिन्नभिन्नधमाश्रयणात्तु नाना नामानि लभत । यथा—सत्ता(शक्तिः) सा यदा भवति सूर्यस्याधिष्ठात्री तदा 'सूर्यदेवता' इत्येव नाम लभते नेन्द्रदेवतानाम, एवं यदा विद्युतोऽधिष्ठात्री सा भवति तदा 'इन्द्रदेवता' इत्येवाभिख्यां—

ताम् ॥ ११ ॥ इति गन्धम् ॥ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ १२ ॥ इत्यक्षतान् ॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥ १३ ॥ इति पुष्पाणि ॥ ( विष्णवे तुलसीं शिवाय बिल्वपत्राणि गणपतये दूर्वाकुरान् सूर्याय अर्कपुष्पाणि, देव्यै रक्तकरवीरपुष्पादीनि चार्पयेत् ) ततः वनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १४ ॥ इति धूपम् । सुप्रकाशो महादीपः सर्वतस्तिमिरापहः । सबाह्याभ्यंतरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ १५ ॥ इति घृत-

---

—समाप्नोति न सूर्यदेवताभिख्याम् । इयमेव सबलं ब्रह्म, इयमेव अपरं ब्रह्म, इयमेव चन्द्रादिदेवता । तदवम् एका परमदेवरूपा परमात्मनो दिव्या शक्तिरेव भिन्नभिन्ननामभिः संशब्द्यते । यत्रेदमाम्नायते—"यो देवानां नामधा एक एवं" ( ऋग्० १०।८२।३ ) " स वरुणः सोऽयमग्निर्भवति स मित्रो भवति प्रातरुद्यन् । स सविता भूत्वाऽन्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवम् ( अथर्व० १३।३।१३ ) " स धाता स विधाता स वायुनभ उच्छ्रितम् । सोऽर्यमा स वरुणः स रुद्रः स महादेवः । सो अग्निः स उ सूर्यः स उ एव महायमः॥ अथर्व० १३।४ ) तदित्थम् उपाधिभेदात् नामभेदे धर्मभेदे च सत्यपि तस्या एवैकस्याः परमशक्तेर्वर्णनं वेदेषु । एनेनैवोपाधिभेदेन धर्मभेदेन च पृथक् पृथग् देवतेव सा परमा शक्तिस्तत्र तत्र स्तूयते, भेदेनैव चानेन प्रार्थनायामपि भेदो जायते । बलेच्छायामिन्द्रात् तत् प्राथयामहे तस्मिन्नेव रूपे परमात्मनो बलाधिष्ठातृत्वात्, पवित्रताभिलाषुकाश्चेत् वरुणस्य प्रार्थयितारो भवामः, अस्मि-

दीपम् ॥ ततो देवताग्रे ताम्रादिपात्रे नैवेद्यम् ॥ सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् । निवेदयामि देवेश सानुगाय गृहाण तत् ॥ १६ ॥ इति पायसादिनैवेद्यम् ॥ नमस्ते देवदेवेश सर्वतृप्तिकरं परम् । अखंडानंदसंपूर्णं गृहाण जलमुत्तमम् ॥ १७ ॥ इत्याचमनम् ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलाचूर्णादिसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥ १८ ॥ इति तांबूलम् ॥ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ १९ ॥ इति ऋतुफलम् ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ २० ॥ इति

—न्नेव रूपे तस्य पवित्रताधिष्ठातृत्वात् । तथा चाम्नातमुपनिषत्सु—"तद् यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेव उ ह्येव सर्वे देवाः" [एतस्यैव=परमदेवस्यैव विसृष्टिः=विविधः प्रसारः ] इति । तदेवं सर्वेषां देवानां परमात्मरूपत्वं मुक्तकण्ठत एवोक्तम् । एवमेव गीतासु श्रीभगवानपि पूर्वोक्तमेवाशयमाविष्करोति—तथाहि—नवमाध्याये (९।२०) विंशतितमे श्लोके "सोमपायिनो मां यज्ञैः पूजयन्ति" इत्युक्तम् । सोमयज्ञेषु चेन्द्रादिभ्य एवाहुतयः प्रदीयन्ते । इन्द्रादयोऽपि परमात्मन एव शवलरूपा इतीन्द्रादिदेवतानां पूजापि वस्तुतः परमात्मनः पूजा । तत्रैव ( ९।२३ ) त्रयोविंशे श्लोके तु मुक्तकण्ठत एवायमाशयो विवृतः । तत्र हि "येऽन्यदेवान् भक्तिपूर्णेन चेतसा श्रद्धापूर्वकं पूजयन्ति, ते वस्तुतो मामेव पूजयन्ति" इति स्पष्टमेवोक्तम् । तत्तद्देवतापूजने फलमपि वस्तुतः परमात्मैव प्रयच्छति ( गी० ७।२२ ) देवताराधनबुद्धिमपि मानवेभ्यः परमेश्वर एव पूर्वकर्मानुसारं वितरति ( गी० ७।२१ ) परमार्थत एवं सत्यपि लोका नैवेन्द्रादिदेवान्—

हिरण्यादिदक्षिणाम् ॥ ततः कर्पूरेण आर्त्तिक्यम् ॥ कदलीगर्भसंभूतं कर्पूरं च सुदीपितम् । आरात्तिकमहं कुर्वे पश्य मे वरदो भव ॥ २१ ॥ इत्यार्तिक्यम् । यानि कानि च पपानि० इति प्रदक्षिणा । नानासुगधपुष्पाणि यथाकालोद्भवानि च । पुष्पांजलिं मया दत्तं गृहाण परमेश्वर ॥ ॥ २२ ॥ इति पुष्पांजलिं च दत्त्वा साष्टांगं प्रणमेत् ॥ तत्सद्ब्रह्मार्पणमस्तु ॥

इति पुराणोक्तसर्वदेवपूजाप्रयोगः ॥

---

अथ श्रावणीप्रयोगः॥ तत्र श्रावणस्य पूर्णिमादिकाले प्रातःस्नानसंध्यादिनित्यावश्यकं कर्म समाप्य गुरुः शिष्यैः सह ग्रामाद्बहिः प्राच्यामुदीच्यां वा नदीतडागादिरम्यं जलाशयं गत्वा तस्माच्चतुरा मृत्पिंडानुद्धृत्य तत्तीरं प्रक्षाल्य तत्र तीर्थादिशुभ्रां मृदमार्द्रं गोमयं भस्म कुशांस्तिलयवतंडुलान् पुष्पाणि दूर्वांकुरापामार्गयज्ञोपवीतादिसर्वां सामग्रीं संस्थाप्य ऋषस्थापनार्थं पीठं श्वेतवस्त्रं पूजनार्थं दुग्धदधिघृतमधुशर्करागंधपुष्पधूपदीपनैवेद्यतां-

---

—परमात्मस्वरूपेण पूजयन्ति किन्तु भेदेनैवेति तेषां पूजनं विधियुक्तं न भवति (गी०९।२३) तथाभूतानधिकृत्यैव सप्तमाध्याये त्रयोविंशे श्लोके अन्यदेवपूजकविषये "देवयजः" इत्युक्तम्, न तु तस्य स्वभक्तत्वम् ईश्वरपूजकत्वं चोररीकृतमित्यास्तां विस्तरः ।

बूलादिसंभारांश्च संपाद्य प्रक्षालितपाणिपादः सपवित्रकरो गुरुः शिष्यैः सह पूर्वमुख उदङ्मुखो वा आचम्य प्राणानायम्य मंगलोच्चारणं कुर्यात् ॥ ॐ श्रीमन्महागणाधिपतये नमः ॥ श्रीलक्ष्मीनारायणाभ्यां नमः ॥ श्रीमदुमामहेश्वराभ्यां नमः ॥ श्रीवाणीहिरण्यगर्भाभ्यां नमः ॥ श्रीशचीपुरंदराभ्यां नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीवेदेभ्यो नमः ॥ श्रीवेदपुरुषेभ्यो नमः ॥ श्रीइष्टदेवताभ्यो नमः ॥ श्रीकुलदेवताभ्यो नमः ॥ श्रीग्रामदेवताभ्यो नमः ॥ श्रीस्थानदेवताभ्यो नमः ॥ श्रीतीर्थदेवताभ्यो नमः ॥ श्रीवास्तुदेवताभ्यो० ॥ श्रीएतत्कर्म प्रधानदेवताभ्यो० ॥ श्रीसर्वेभ्यो देवेभ्यो नमः ॥ श्रीसर्वेभ्यो ब्राह्मणेभ्यो नमोनमः ॥ ॐ वरुणाय नमः ॥ निर्विघ्नमस्तु ॥ ॐ पुण्यं पुण्याहं दीर्घमायुरस्तु । ॐ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥

॥ ५ ॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान् मंगलायतनो हरिः ॥ ७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥८॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ ९ ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशंतु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १० ॥ वक्रतुंड महाकाय सूर्यकोटिसमप्रभ ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ११ ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ॥ यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १२ ॥ गणनाथं नमस्कृत्य नमस्कृत्य पितामहम् ॥ विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वतीम् ॥ १३ ॥ स्थानं क्षेत्रं नमस्कृत्य दिननाथं निशाकरम् ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम् ॥ ॥ १४ ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम् ॥ राहुं केतुं नमस्कृत्य यज्ञारंभे विशेषतः ॥ १५ ॥ शक्रादिदेवताः सर्वानृषींश्चैव तपोधनान् ॥ गर्गं मुनिं नमस्कृत्य नारदं पर्वतं तथा ॥१६॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् ॥ अगस्त्यं च पुलस्त्यं च दक्षमित्रं पराशरम् ॥१७॥

भारद्वाजं च मांडव्यं याज्ञवल्क्यं च गालवम् ॥ अन्ये विप्रास्तपोयुक्ता वेदशास्त्रविचक्षणाः ॥ १८ ॥ तान्सर्वान्प्रणिपत्याहं शुभकर्म समारंभे ॥ अग्रतः श्रीनृसिंहश्च पृष्ठतो देवकीसुतः ॥ रक्षतां पार्श्वयोर्देवौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥

कुशाक्षयतिलजलान्यादाय सर्वे पूर्वाभिमुखाः संकल्पं कुर्युः । स यथा ॐ स्वस्तिश्रीमुकुंदसच्चिदानंदस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृंभिताविद्यायोगात् कालकर्मस्वभावाविर्भूतमहत्तत्वोदिताहंकारोद्भूतवियदादिपंचमहाभूतेंद्रियदेवतानिर्मिते अंडकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्तजगदुत्पत्तिस्थितिलयकारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानंतवीर्यस्य श्रीमद्भगवतो महापुरुषस्य अचिंत्यापरिमितशक्त्या ध्येयमानस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमेऽव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन्महति ब्रह्मांडखंडे आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्मानंतवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैर्ध्रियमाणे ऐरावतपुंडरीकवामनकुमुदांजनपुष्पदंतसार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलमहातलरसातलपाताललोकानामुपरिभागे भूलोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्य-

लोकाख्यसप्तलोकानामधोभागे चक्रवालशैलमहावलयनागमध्यव-र्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमंडिते दिग्दंतिशुंडोत्तंभिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववतीकांच्यवंत्यलकावतीयशोवतीपुण्यपुरीप्रतिष्ठिते इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेष्टदिक्पालप्रतिष्ठिते वरध्रुवाधरसोमपाप्रभंजनानलप्रत्यूषप्रभासाख्याष्टवसुभिर्विराजिते हरत्र्यंबकरुद्रमृगव्याधापराजितकपालिभैरवशंभुकपर्दिवृषाकपिबटुरूपाख्यैकादशरुद्रैः संशोभिते रुद्रोपेंद्रसवितृधातृत्वष्ट्रर्यमेंद्रेशानभगमित्रपूषाख्यद्वादशादित्यप्रकाशिते यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गनिरतवसिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौंडिन्यगौतमाङ्गिरसपाराशर्यव्यासवाल्मीकिशुकशौनकभरद्वाजसनकसनंदनसनातनसनत्कुमारनारदादिमुख्यमुनिभिः पावित्रिते लोकालोकाचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकशुक्तसप्तार्णवपरिवृते जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्कराख्यसप्तद्वीपयुते इन्द्रकांस्यताम्रगभास्तनागसौम्यगंधर्वचारणभारतेतिनवखंडमंडिते सुवर्णगिरिकर्णिकोपेतमहासरोरुहाकारपंचाशत्कोटियोजनविस्तीर्णभूमंडले अयोध्या मथुरा माया काशी कांच्यवंतिका द्वारावतीति सप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्रामशंभलनंदिग्रामत्रयविराजिते चंपकारण्यबदरिकारण्यदंडकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजंबुकारण्यविंध्यारण्यद्राक्षारण्यनहुषारण्यकाम्यकार-

ण्यद्वैतारण्यनैमिषारण्यादीनां मध्ये सुमेरुनिषधकूटशुभ्रकूटश्रीकूट-
हेमकूटरजतकूटचित्रकूटत्रिकूटकिष्किंधश्वेताद्रिकूटहिमविंध्याचला-
नां हरिवर्षकिंपुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनाविस्तीर्णे भरतखं-
डे मलयाचलसह्याचलविंध्याचलानामुत्तरेण-स्वर्णप्रस्थचंडप्रस्थसू-
क्तिकचंतकरमणकमहारमणकपांचजन्यसिंहललंकाऽशोकवत्यल-
कावतीसिद्धवतीगांधर्ववत्यादिपुण्यपुरीविराजिते नवखंडोपद्वीपमं-
डिते दक्षिणावस्थिरेणुकाद्वयसूकरकाशीकांचीकालिकालवटेश्वर-
कालंजरमहाकालेतिनवोषरयुते द्वादशज्योतिर्लिंगगंगा-( भागी-
रथी)-गोदा-क्षिप्रा-यमुना-सरस्वती-नर्मदा-तापी-पयोष्णी-
चन्द्रभागा-कावेरी-मंदाकिनी-गोदावरी-प्रवरा-कृष्णा- वेण्या-
भीमरथी-तुङ्गभद्रा-मलापहा-कृतमाला-ताम्रपर्णी विशालाक्षी-
वंजुला-चर्मण्वती-वेत्रवती-भोगावती-विशोका-कौशिकी-गंड-
की-वासिष्ठी-प्रमदा-विश्वामित्री-फल्गुनी-चित्रकाश्यपी-सरयू-
सर्वपापहारिणी-करतोया-प्रणीता-वज्रा-वक्रगामिनी-सुवर्ण-
रेखा-शोणा-भवनाशिनी-शीघ्रगा-कुशावर्तिनी-ब्रह्मानंदा-महि-
तनये-त्यनेकपुण्यनदीभिर्विलसिते ब्रह्मपुत्रसिंधुनदादपरमपवित्र-
जलविराजिते हिमवन्मेरुगोवर्धनक्रौंचचित्रकूटहेमकूटमहेंद्रमलय-
सह्येन्द्रकीलपारियात्राद्यनेकपर्वतसमन्विते मतंगमाल्यकिष्किंधऋ-
ष्यशृंगेतिमहानगसमन्विते अंगवंगकलिंगकाश्मीरकांबोजसौवीर-
सौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोरलपांचालगौडमालवमलयसिं-

हलद्रविडकर्नाटकललाटकरहाटवरहाटपांड्यानिषधमागधआंध्रदेशार्ण-भोज-कुरुगांधारविदर्भविदेहबाल्हीकबर्बरकैकयकोसलविराट-शूरसेनकोंकणकैकटमत्स्यभद्रपारसीकखर्जूरयवनम्लेच्छजालंधरेतिसिद्धवत्यन्यदेशविशेषभाषाभूमिपालविचित्रिते इलावृतकुरुभद्राश्व-केतुमालकिंपुरुषरमणकहिरण्मयादिनववर्षाणांमध्येभरतखंडेकोकं-तहिरण्यश्रृङ्गाकुब्जार्बुदमाणिकर्णविटशालग्रामसूकरमथुरागयानि-ष्कमणलोहार्गलपोतस्वामिप्रभासबदरीतिचतुर्दशगुह्यविलसिते जंबू-द्वीपकुरुक्षेत्रादिसमभूमध्यरेखाया अमुकादिग्भागे कुलमेरोर्दक्षिण-दिग्भागे विंध्यस्य अमुकादिग्भागे मत्स्यकूर्मवराहनृसिंहवामनपरशु-रामरामकृष्णबुधकल्कीतिदशावताराणां मध्ये बौद्धावतारे गंगादिस-रिद्भिः पाविते एवं नवसहस्रयोजनविस्तीर्णे भारतवर्षे निखिलजन-पावनपरमभागवतोत्तमशौनकादिनिवासिते नैमिषारण्ये आर्या-वर्तांतर्गतब्रह्मावर्तैकदेशे सूर्यान्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायणना-भिकमलोद्भूतसकलजगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपंचाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथंतरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायंभुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वं-तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमे विभागे ( पादे ) श्रीमन्नृपवि-क्रमार्कात् श्रीमन्नृपशालिवाहनाद्वा यथासंख्यागमेन चांद्रसावन-

सौरनाक्षत्रादिप्रकारेणागतानां प्रभवादिषष्टिसंवत्सराणां मध्ये अमुकनाम्नि संवत्सरे उत्तरगोलावलंबिनि श्रीमार्तंडमंडले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थे चंद्रे अमुकस्थे सूर्ये अमुकस्थे गुरौ शेषेषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं मम इह जन्मनि जन्मांतरे वा बाल्ययौवनवार्धकयावस्थासु वाक्पाणिपादपायूपस्थघ्राणरसना-चक्षुः-स्पर्शनश्रोत्रमनोभिचरितज्ञाताज्ञातकामाकाममहापातकोपपातकादिसंचितानां पापानां ब्रह्महननसुरापानसुवर्णस्तेय-गुरुतल्पगमनतत्संगरूपमहापातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानामुपपातकानां च स्पृष्टास्पृष्टसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणविहिताकरणकर्मलोपजनितानां रसविक्रयकन्याविक्रयहयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयाजादि

---

१ "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापिः तैः सह ॥" २ उपपातकानि गोवधादीनि मन्वादिषुद्रष्टव्यानि । ३ "खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥" ४ "कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥" ५ "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥" ६ "ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥"

पशुविक्रयस्वगृहविक्रयनीलीविक्रयाक्रेयविक्रयपण्यविक्रयजलच-
रादिजंतुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसंभूतानां निरर्थ-
कवृक्षच्छदनऋणानपाकरण-ब्रह्मस्वापहरणदेवस्वापहरणराजस्वा-
पहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलाहरण-लोहादिहरण-
नानावस्तुहरणरूपाणां ब्राह्मणनिंदागुरुनिंदा-वेदनिंदाशास्त्रनिंदा-
परनिंदाऽभक्ष्यभक्षणाभोज्यभोजनाचाष्यचोषणालह्यलहनापेयपा-
नास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावंद्यवंदनाचिंत्यचिन्तना-
याज्ययाजनापूज्यपूजनरूपाणां मातृपितृतिरस्कारस्त्रीपुरुषप्रीति-
भेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचांडालादिहीन-
जातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरूपाणां कूटसाक्षि-
त्वपैशुन्यवादमिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषकरणब्रह्मवृत्तिच्छे-
दनपरवृत्तिहरणरूपाणां मित्रवंचनगुरुवंचनस्वामिवंचनासत्यभाष-
णगर्भपातनपार्थितांबूलचर्वणहीनजातिसेवनपरान्नगणान्नभोजनल-
शुनपलांडुगृंजनभक्षणतालवृक्षफलभक्षणोच्छिष्टमार्जारोच्छिष्टपर्यु-
षितान्नभक्षणरूपाणां पंक्तिभेदकरणभ्रूणहिंसापशुहिंसाबालहिंसा-
द्यनेकहिंसोद्भुतानां, शौचत्यागस्नानत्यागसंध्यात्यागौपासनाग्नित्या-
गवैश्वदेवत्यागरूपाणां, निषिद्धाचरणकुग्रामवासब्रह्मद्रोहपितृमातृद्रो-
हपरद्रोहपरानिंदात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां, गोयानवृष-
भयानमहिषयानगर्दभयानोष्ट्रयानाजयान-भृत्याभरणस्वग्रामत्या-
गगोत्रत्यागकुलत्यागदूरस्थमंत्रणविप्राशाभेदनावंदिताशीर्वादग्रह-

णपतितसंभाषणरूपाणां, पतितजनपंक्तिभोजनाहःसंगमवृथा-
मनोरथादिपापानाम् आत्मार्थे पाककरणेकाकीमिष्टान्नभोजन-
बालकैः सह भोजनात्मस्त्रिया सह भोजनेत्यादिप्रकीर्णपातकानाम्,
एतत्कालपर्यंतं संचितानां लघुस्थूलसूक्ष्माणां च निःशेषपरिहारार्थं
सहस्रगोदानकुरुक्षेत्रादिसर्वतीर्थस्नानजन्यफलप्राप्त्यर्थं समस्तपितॄ-
णामात्मनश्च विश्वादिलोकप्राप्तये अधीतानामध्येष्यमाणानां चा-
ध्याप्यानां, स्थापनविच्छेदक्रोशघोषण दंतविवृतिदुर्वृत्तद्रुतोच्चारित-
वर्णानां,पूर्वसवर्णानां गलोपलंबितविवृतोच्चारितवर्णानां, श्लिष्टास्प-
ष्टवर्णविघट्टनादिभिःपठितानां श्रुतीनां यथातयामत्वं तत्परिहारार्थम्
अष्टात्रिंशदनध्यायाध्ययने रथ्यासंचरतेःशूद्रस्यशृण्वतोऽध्ययनेम्ले-
च्छांत्यजादेः शृण्वतोऽध्ययनेऽशुचिदेशेऽध्ययने आत्मनाऽशुचित्वेऽ-
ध्ययेने अक्षरस्वरानुसारपदच्छेदकंडिकाव्यंजनह्रस्वदीर्घप्लुतकंठ-
तालुमूर्द्धन्योष्ठ्यदन्त्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानी-
योदात्तानुदात्तस्वरितादीनां च व्यत्ययेनोच्चारमाधुर्याक्षरव्यक्तिही-
नत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसंपादन-
द्वारा यथावत्फलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं देवब्राह्मणसवितासूर्य-
नारायणसान्निधौ गङ्गाभागीरथ्याम् अमुकतीर्थे तडागे वा प्रवाहा-
भिमुखम् अध्यायोत्सर्गोपाकर्मनिमित्तं गणस्नानमहं करिष्ये॥ इति
संकल्प्य स्नानानुज्ञां प्रार्थयेत् ॥ इति हेमाद्रिकृतः संकल्पः ॥
नमोऽस्तु देवदेवाय शितिकंठाय वेधसे॥ रुद्राय चापहस्ताय

दंडिने चक्रिणे नमः ॥१॥ सरस्वता च गायत्री वेदमाता गरीयसी ॥ सन्निधात्री भव त्वं च सर्वपापप्रणाशिना ॥२॥ यद्वा सागरनिर्घोषदंडहस्तसुरांतक ॥ जगत्स्रष्टर्जगन्मित्र त्वां नमाम्यसुरान्तक ॥३॥ तीक्ष्णदंष्ट्र महाकाय कल्पांतदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञा दातुमर्हसि ॥४॥ आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ॥ पापं नाशय मे देव वाङ्मनःकायकर्मजम् ॥ ५ ॥ इति स्नानानुज्ञां प्रार्थ्य पूर्वोक्तकातीयस्नानविधिना स्नानांगतर्पणं च कृत्वा ॥ ततो धौतवाससी परिधाय दर्भासनादौ प्राङ्मुख उदङ्मुखो वोपविश्य भस्मगोपीचंदनकुंकुमादिना तिलकं धृत्वा पवित्रपाणिराचम्य माध्याह्नसंध्यां कुर्यात् ॥ (संध्याप्रयोगः पूर्वोक्तवज्ज्ञेयः) ततः ॐ विभ्राडित्यनुवाकसहस्रशीर्षेतिपुरुषसूक्तशिवसंकल्पमंडलब्राह्मणैः सूर्यमुपतिष्ठेत् ( तच्च पूर्वमुक्तम् ) ॥ अथासनापरि न्यस्तेषु प्रागग्रेषु दर्भेषु स्वस्तिकासनेन प्राङ्मुख उपविष्टः पाण्योर्मध्ये सप्तपर्णं दर्भमादाय दक्षिणोरौ मुकुलीकृतमंजलिं निधाय प्रणवव्याहृतिपूर्विकां गायत्रीं जपित्वा ऋष्याद्यनुसंधाय ॥ इषेत्वा इत्यादि यथाशक्ति ब्रह्मयज्ञं कुर्यात् ॥ तत आचामेत् ॥ एवं ब्रह्मयज्ञं कृत्वा देवर्षिमनुष्यपितृतर्पणं च कुर्यात् (तच्च पूर्वं द्रष्टव्यम्) ॥ एवमुक्तविधिना नित्यस्नानमाध्याह्निकसंध्यातर्पणानि समाप्य वक्ष्यमाणप्रकारेणारुंधतीसमेतान्कश्यपादिसप्तर्षीन्सप्रवरान्स्थापयेत् ॥ इति स्नानादिप्रयोगः ॥

अथ ऋषिपूजनम् ॥ तत्रादौ ( ऋचं वाचं प्रपद्ये इति शांतिसूक्तम् ) ॥ ॐ द्यौःशांतिरन्तरिक्षꣳशांतिः पृथिवी-शांतिरापःशांतिरोषधयःशांतिः ॥ वनस्पतयःशांतिर्वि-श्वेदेवाःशांतिर्ब्रह्मशांतिःसर्वꣳशांतिःशांतिरेवशांतिःसा-माशांतिरेधि ॥ १ ॥ यतोयतःसमीहसे ततो नोऽअभयं कुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नः पशुभ्यः ॥२॥ इति शांति-पाठं पठंतः अपामार्गमिश्रितैस्त्रिभिस्त्रिभिर्दर्भपवित्रैः पृथक् पृथक् गायत्रीं जप्त्वा ब्रह्मग्रंथियुक्तान् सप्तऋषीन् कुर्युः॥ (कश्यपोऽथ भरद्वाजो गौतमश्चात्रिरेव च ॥ जमदग्निर्वसिष्ठश्च विश्वा-मित्रो महामनाः ॥ एते च ऋषयः सप्त साध्वी चैवाप्य-रुंधती ) ततः पीठे नवं सदशधौतं वस्त्रं प्रसार्य तदुपरि प्राग-ग्रानुदगग्रान् वा सप्तर्षीन् स्थापयेत् ॥ अथ प्रतिष्ठापूजने ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्त्वरिष्टंय्य-ज्ञꣳसमिमन्दधातु । विश्वेदेवासऽइहमादयन्तामो ३ म्प्र-तिष्ठ ॥ १ ॥ ॐ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्ते सर्वमेवप्रतिष्ठितंभवति ॥ २ ॥ ॐ सप्तर्षयः प्रतिष्ठा सुप्रति-ष्ठितमस्तु इति ऋष्युपरि अक्षतान् विकिरेत् ॥ ( ऋष्यावाहनम् ) ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपम् आवाहयामि भो

कश्यप इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखो भव ॥ १ ॥ ॐ भूर्भुवःस्वः भरद्वाजाय नमः भरद्वाजम् आवाहयामि भो भरद्वाज इहाग० ॥ २ ॥ ॐ भूर्भुवः स्वः गौतमाय नमः गौतमम् आवाहयामि भो गौतम इहागच्छ० ॥ ३ ॥ ॐ भूर्भुवः स्वः अत्रये नमः अत्रिम् आवाहयामि भो अत्रे इहाग० ॥ ४ ॥ ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमावाहयामि भो जमदग्ने इहाग० ॥५॥ ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठम् आवाहयामि भो वसिष्ठ इहाग० ॥ ६ ॥ ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रम् आवाहयामि भो विश्वामित्र इहाग० ॥ ७ ॥ ॐ भूर्भुवः स्वः अरुंधत्यै नमः अरुन्धतीम् आवाहयामि भो अरुन्धति इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखा सुप्रसन्ना वरदा भव ॥८॥ इत्यावाह्य ॥ ॐ मनोजूतिरिति० अरुंधतीसहिताः सप्तर्षयः सुप्रतिष्ठिता वरदा भवंतु इति प्रतिष्ठाप्य । ॐ इमावेवगोतमभरद्वाजावयमेवगोतमोऽयंभरद्वाजइमामेवविश्वामित्रजमदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेवव्वसिष्ठकश्यपावयमेववसिष्ठोयंकश्यपोव्वागेवात्त्रिर्वाचाह्यन्नमद्यतेत्तिर्हवैनामैतद्यदात्त्रिरितिसर्व्वस्यात्ताभवतिसर्वस्यान्नभवतियऽएवं वेद ॥ इति पठेत् ॥ ततः सर्वे आचम्य

प्राणानायम्य देशकालौ संकीर्त्य ॥ ममात्मनः श्रुतिस्मृतिपुराणो-
क्तफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थम् उत्सर्जनाङ्गत्वेन अरुंधतीसहि-
तकश्यपादिसप्तर्षिपूजनमहं करिष्ये ॥ तत्रादौ निर्विघ्नार्थं गण-
पतिस्मरणं च करिष्ये इति संकल्प्य ॐ सुमुखश्चैकदंतश्चे-
त्यादिगणपतिस्मरणं कृत्वा ऋषीन् ध्यायेत् ॥ ( ध्यानम् ) ॐ
सप्तऽऋषयुः प्रतिहिताः शरीरे सप्त रक्षन्ति सदुमप्रमादम् ॥
सप्तापुः स्वपतो लोकमीयुस्तत्र जागृतो ऽअस्वप्नजौ सत्रुसदौ च
देवौ ॥ १ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥
समूढमस्य पाꣳसुरे स्वाहा ॥ २ ॥ ॐ सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशा-
ङ्गुलम् ॥३॥ ॐ भूर्भुवः स्वः अरुंधतीसहकश्यपादिऋषिभ्यो
नमः ध्यानं समर्पयामि ॥ १ ॥ ॐ पुरुषएवेदꣳ सर्वं यद्भूतं
यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॐ
भूर्भुवः स्वः अरुंध० नमः आसनं समर्पयामि ॥ २ ॥ ॐ
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा
भूतानि त्रिपादस्यामृतं दिवि ॥ ॐ भूर्भुवः स्वः अरुंध-
तीस० नमः पाद्यं समर्पयामि ॥ ३ ॥ ॐ त्रिपादूर्ध्व ऽउदैत्पु-

रुषः॑पादो॑ऽस्येहाभ॑वत्पुनः॑ ॥ ततो॒ विष्व॒ङ्व्यक्रामत्साशनानशने॒ऽअभि ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः अर्घ्यं० ॥ ॥ ४ ॥ ॐ ततो॑ विराड॑जायत विराजो॒ऽअधिपूरु॑षः ॥ सजातो॒ऽअत्य॑रिच्यतप॒श्चाद्भूमि॒मथो॑पुरः॑ । ॐभूर्भुवः स्वः अरुन्ध० न० आचमनीयं० ॥ ५ ॥ ॐतस्मा॑द्य॒ज्ञात्स॑र्व॒हुतः॒सम्भृ॑तम्पृषदा॒ज्यम् । प॒शूँस्ताँश्च॑क्रे वाय॒व्या॒नार॒ण्या॒ग्रा॒म्याश्च॒ये ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः स्नानं० ॥ ॥ ६ ॥ ॐ पञ्च॑नद्यः॒सर॑स्वतीमपि॑यन्ति॒सस्रो॑तसः ॥ सरस्वती॒तुप॑ञ्च॒धासोदे॒शे भ॑वत्स॒रित् ॥ ॐभूर्भुवः स्वः अरुन्धती० पंचामृतस्नानं० ॥ ७ ॥ ॐ गंधद्वारां दु॒राध॒र्षां नि॒त्यपु॑ष्टांकरी॒षिणी॑म् ॥ ईश्व॒री॑सर्व॑भूता॒नां॒तामि॒होप॑ह्वये॒श्रि॒यम् ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः गन्धोदकस्नानं० ॥ ॥ ८ ॥ ( ततः पुरुषसूक्तेनाभिषेकं कुर्यात् ) ॥ ॐ तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒ऽऋचः॒सामा॑निजज्ञिरे ॥ छंदां॑सिजज्ञिरे॒तस्मा॒द्यजु॒स्तस्मा॑दजायत ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः वस्त्रं समर्पयामि ॥ ९ ॥ ॐ तस्मा॒दश्वा॑ऽअजायन्त॒येकेचो॑-

भयादेतं ॥ गावौहयज्ञिरेतस्मात्तस्माज्जाताऽअजावर्यः ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः यज्ञोपवीतं स० ॥ १० ॥ ॐतँयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतं ॥ तेनं देवाऽअयजन्तसाध्याऽऋषयश्चये ॥ ॐ भूर्भुवः स्वः अरुंध० नमः गंधं समर्पयामि ॥ ११ ॥ ॐ अक्षन्नमीमदन्तह्यवंप्रियाऽअंधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोषान्विन्द्रतेहरी ॥ ॐ भूर्भुवः स्वः अरुंध० नमः अक्षतान् ० ॥ ॥ १२ ॥ ॐ अहिरिवभोगैः पर्य्येतिबाहुंज्ज्यायांहेतिम्परिबाधमानं॥हस्तघ्नोविश्वांव्वयुनानिविद्वान्पुमान्पुमांसम्परिपातुविश्वतः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः हारिद्राकुंकुमादिद्रव्याणि समर्पयामि ॥ १३ ॥ ॐ यत्पुरुषंव्व्यदधुःकति धाव्यंकल्पयन् ॥ मुखंकिमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ ॐ भूर्भुवः स्वः अरुंध० नमः पुष्पाणि० ॥ १४ ॥ ॐ ब्राह्मणोस्यमुखंमासीद्बाहूराजन्यः कृतं ॥ ऊरूतदस्ययद्वैश्यः पद्भ्यांशूद्रोऽअंजायत ॥ ॐ भूर्भुवः स्वः अरुंध० नमः धूपं सम० ॥ १५ ॥ ॐ चन्द्रमामनं-

सोजातश्चक्षोः सूर्य्यो॑ऽअजायत ॥ श्रोत्रा॑द्वायुश्च॑प्राणश्च॒मु-
खा॑दग्निर॑जायत ॥ ॐ भूर्भुवः स्वः अरुंध० नमः दीपं
सम० ॥ १६ ॥ ॐनाभ्या॑ऽआसीदन्तरि॑क्षꣳशीर्ष्णोद्यौः
समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोका२ऽ
अंकल्पयन् ॥ ॐ भूर्भुवः स्वः अरुंध० नमः नैवेद्यं स० ॥
॥ १७ ॥ ( नैवेद्यांते आचमनीयं समर्पयामि) ॥ ॐ याः
फलिनीर्या॑ऽअफला॑ऽअपुष्पायाश्च॑पुष्पिणीः ॥ बृहस्पति-
प्प्रसूतास्तानो॑मुञ्चन्त्वꣳहसः ॥ ॐ भूर्भुवः स्वः अरुंध०
नमः फलानि सम० ॥ १८ ॥ ॐ यत्पुरु॑षेणह॒विषा॑देवाय-
ज्ञमतंन्वत ॥ व्वसन्तोस्यासीदाज्यंग्ग्रीष्मऽइध्मः शरद्ध-
विः ॥ ॐ भूर्भुवः स्वः अरुंधती० नमः तांबूलं० ॥ १९ ॥
ॐ हिरण्यगर्भः सम॑वर्त्तताग्रे॑भूतस्य॑जातः पति॒रेक॑ऽआसीत्।
सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै॑देवाय॑ हविषा॑व्विधेम ॥
ॐ भूर्भुवः स्वः अरुंधती० नमः दक्षिणां सम० ॥ २० ॥
ॐ इदꣳहविः प्रजननम्मे॑ऽअस्तुदश॑वीरꣳसर्व॑गणꣳस्व-
स्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्यंभयस-

निअग्निं प्रजाम्बहुलाम्मे करोत्वन्नम्पयोरेतोऽअस्मासु-धत्त ॥ ॐ भूर्भुवः स्वः अरुन्धतीस० नमः कर्पूरार्त्तिक्यं समर्पयामि ॥ २१ ॥ ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ ॐ भूर्भुवः स्वः अरुंधतीसहित० प्रदक्षिणां सम० ॥ २२ ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ ॐ भूर्भुवः स्वः अरुंध० मंत्रपुष्पांजलिं समर्पयामि ॥ २३ ॥ ( प्रार्थना ) ॐ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया पूर्वं परिपूर्णं तदस्तु मे ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः नमस्कारं समर्पयामि ॥ २४ ॥ अनेन मया वेदोत्सर्जनांगत्वेन कृतेन ध्यानावाहनादिषोडशोपचारैः पूजनेन अरुन्धतीसहितकश्यपादिसमर्पयः प्रीयंतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ऋषिपूजनम् ॥

अथ स्वपितृभ्यो यज्ञोपवीतदानम् ॥ तत्रादौ सर्वे प्राचीनावीतिनो दक्षिणामुखाः स्वपुरतो यज्ञोपवीतानि निधाय कुशोदकं गृहीत्वा ॐ अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः (तथा द्वितीयं ) ॐ अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमाता-

महेभ्यः ( तृतीयं ) ॐ कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वधा संपद्यंताम् इति समर्पयेत् ॥ ( जीवत्पितृकै-रपि पितुः पित्रादिभ्यो मातामहादिभ्यश्च यज्ञोपवीतानि देयानि ) ततः सव्यं कृत्वा सर्वान् ब्राह्मणान् गंधादिना संपूज्य तेभ्यो यज्ञोपवीतानि दत्त्वा सर्वैः सह स्वयमपि धार्याणि ॥

अथ यज्ञोपवीतधारणप्रयोगः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ मम श्रौतस्मार्तकर्मानुष्ठानसिद्धिद्वारा श्रीप-रमेश्वरप्रीत्यर्थं नूतनयज्ञोपवीतधारणमहं करिष्ये तदंगत्वेन यज्ञो-पवीताभिमंत्रणं करिष्ये ॥ इति संकल्प्य । ॐ इदंविष्णुर्विच-क्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरे स्वाहा ॥ ॐ आपोहिष्ठामयोभुव इत्यादिमंत्रैरुपवीतानि प्रक्षाल्य अनंतरं दशगायत्रीमंत्रैरभिमंत्र्य पुष्पाण्यादाय तंतुषु देवतानामावाहनं कुर्यात् ॥ तद्यथा-प्रथम-तंतौ ॐ कारमावाहयामि ॥ ॥ १ ॥ द्वितीयतंतौ ॐ अग्निमावाहयामि ॥ तृतीयतंतौ ॐ सर्पानावा० ॥ ३ ॥ चतुर्थतन्तौ ॐ सोममावाह० ॥ ॥ ४ ॥ पञ्चमतन्तौ ॐ पितॄनावाहयामि० ॥ ५ ॥ षष्ठ-तन्तौ ॐ प्रजापति० ॥ ६ ॥ सप्तमतन्तौ ॐ अनिल० ॥ ॥ ७ ॥ अष्टमतन्तौ ॐ सूर्यमावाह० ॥ ८ ॥ नवमतन्तौ ॐ विश्वान्देवानावाहयामि ॥ ९ ॥ ( अथ ग्रंथिदेव-

तानामावाहनम् ) ग्रंथिमध्ये ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि ॥ १ ॥ ॐ विष्णवे नमः विष्णुमावाह० ॥ ॥ २ ॥ ॐ रुद्राय नमः रुद्रमावाहयामि ॥ ३ ॥ ततः ॐ प्रणवाद्यावाहितदेवताभ्यो नमः यथास्थानमहं न्यसामि इत्यावाह्य गंधादिभिः पूजयेत् ॥ ततो ध्यानम् (ॐप्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् । ब्रह्मत्वसिद्ध्यै च यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम्) यज्ञोपवीतमिति मंत्रस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः यज्ञोपवीतधारणे विनियोगः ॥ ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ अनेन मंत्रेण यज्ञोपवीतानां पृथक् पृथक् धारणं कुर्यात् । तत आचमनं कृत्वा ॥ "एतावद्दिनपर्यंतं ब्रह्मत्वं धारितं मया ॥ जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ १ ॥" इति मंत्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य भूमौ त्यजेत् ।

---

१ यत्तु कात्यायनवाक्यम्—'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' इति, तन्निरपेक्षार्थाभिधायकस्वशास्त्रविषयम् । सापेक्षं तु स्वशास्त्रे शास्त्रान्तरोक्तं ग्राह्यमिति स एवाऽऽह— "यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥" इति । एवं च 'यज्ञोपवीतम्' इति मन्त्रस्य शाखान्तरीयत्वेऽपि न दोष इति सूक्ष्ममीक्षणीयम् ॥

पश्चाद्यथाशक्ति गायत्रीजपं कुर्यात् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य स्मृत्या० ॥ इति यज्ञोपवीतधारणप्रयोगः ॥

अथोत्सर्गाङ्गमृषितर्पणम् ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य छंदसां क्वचिदनध्यायादिकाले पठनादनधिकारिभिः श्रवणाच्च प्राप्तमालिन्यस्य निरासार्थमुत्सर्गाङ्गतर्पणमहं करिष्ये ॥ इति संकल्प्य दक्षिणं जान्वाच्य ईशानाभिमुखः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देवतर्पणं कुर्यात् ॥ ॐ विश्वे देवासऽआगंतशृणुतामंऽइमर्ठंहवंम् ॥ एदम्बर्हिर्निषीदत ॥ १ ॥ विश्वेदेवाःश्शृणुतेमर्ठंहवंम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजंत्राऽआसद्यास्मिन्न्बर्हिषिमादयध्वम् ॥ ॥ २ ॥ इति देवानावाह्य ॐ देवास्तृप्यंताम् ॥ ॐ छंदांसि तृप्यंताम् ॥ ॐ वेदास्तृप्यंताम् ॥ ॐ ऋषयस्तृप्यंताम् ॥ ॐपुराणाचार्यास्तृप्यंताम् ॥ ॐगंधर्वास्तृप्यंताम् ॥ ॐइतराचार्यास्तृप्यंताम् ॥ ॐ संवत्सरास्तृप्यंताम् ॥ ततो वामं जान्वाच्य ॥ दक्षिणामुखोऽपसव्येन तिलमिश्रितं जलमंजलौ

---

१ संग्रहे— 'उपाकर्मणि चोत्सर्गे गते मासचतुष्टये । नवयज्ञोपवीतानि धृत्वा पूर्वाणि संत्यजेत् ॥ " अन्यच्च—'सूतके मृतके चैव गते मासचतुष्टये । नवयज्ञोपवीतानि धृत्वा जीर्णानि संत्यजेत् ॥ नष्टे भ्रष्टे नवं मन्त्राद् धृत्वा भ्रष्टं जले क्षिपेत् । " स्तनादूर्ध्वमधो नाभेर्न धार्यं तत्कथंचन ॥

गृहीत्वा ॐ अमुकगोत्राः अस्मत्पितरः अमुकशर्माणो वसुरूपास्तृप्यध्व स्वधा नमः ॥ ॐ अमुकगोत्रा अस्मत्पितामहाः अमुकशर्माणो रुद्ररूपास्तृप्यध्व स्वधा नमः । ॐ अमुकगोत्राः अस्मत्प्रपितामहाः अमुकशर्माण आदित्यरूपास्तृप्यध्वं स्वधा नमः ॥ इति स्वपितृँस्तर्पयेत् ॥ एवं मातृमातामहादींश्च तर्पयेत् ( जीवत्पितृकैः पुत्रैः शिष्यैश्चाचार्यस्य पितृतर्पणं कार्यं तद्यथा ॐ अमुकगोत्राः अस्मदाचार्यपितरस्तृप्यध्वं स्वधा नमः इति ) ततः सव्यम् आचमनम् ॥ अथ वंशानां वाचनम् ॥ ॐ अयं पुर इत्यादिपंचानां साध्या ऋषयो यजूंषि प्राणभृतो देवताः ॥ मूर्द्धेत्यादिद्वयोर्देवा ऋषयो यजूंषि लिंगोक्ता देवताः । माछन्दइत्यादिषोडशानां परमेष्ठी ऋषिर्यजूंषि लिङ्गोक्ता देवताः ऋषितर्पणे विनियोगः ॥ सप्तऽऋषय इत्यस्य याज्ञवल्क्य ऋषिः ॥ सप्तर्षयो देवताः जगती छन्दः ऋषितर्पणे विनियोगः ॥ ॐ अयं पुरोभुवस्तस्यप्राणोभौवायनो व्वसन्तः प्राणायनो गांयत्री व्वासन्ती गांयत्र्यै ॥ गांयत्रङ्गांयत्रादुपाᳫंशुरुंपाᳫंशोस्त्रिवृत्त्रिवृतोरक्षावरंवासिष्ठऽऋषिं÷प्रजापंतिगृहीतया त्वयाप्राणङ्गृह्णामिप्रजाभ्यं÷॥१॥अयन्दंक्षिणाव्विश्वकंर्म्मा तस्यमनांव्वैश्वकर्मणङ्ग्रीष्मोमांनसस्त्रिष्टुबग्रैष्मींत्रिष्टुभं÷

स्वारꣳ स्वारादन्तर्य्यामो तर्य्यामात्पञ्चदशं पञ्चदशाद्बृहद्भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥ २ ॥ अयं पश्चात् ॥ अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्यो जगती वार्षी जगत्या ऋक्समम् ऋक्समाच्छुक्रं शुक्रात्सप्तदशं सप्तदशाद्वैरूपं जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥ ३ ॥ इदमुत्तरात्स्वस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभ ऐडमैडान्मन्थी मन्थिन एकविꣳशमेकविꣳशाद्वैराजं विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ॥ ४ ॥ इयमुपरि मतिस्तस्यै वाङ् मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यो लोकं ता इन्द्रम् ॥ ५ ॥ लोकम्पृण च्छिद्रम्पृणाथो सीद ध्रुवा त्वम् ॥ इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥ ६ ॥ ता अस्य सूददोहसः

ऽसोमर्ठ॑श्रीणन्तिपृश्श्नयः ॥ जन्मन्देवानाँव्विशस्त्रिष्वा-
रोचनेदिवः ॥ ७ ॥ इंद्रँविश्श्वाऽअवीवृधन्त्समुद्रव्यचस-
ङ्गिरः । रथीतमर्ठ॑रथीनाँ व्वाजानार्ठ॑सत्पतिम्पतिम् ॥
॥ ८ ॥ मूर्द्धाव्वयः प्रजापतिश्छन्दः क्षत्रंव्वयोमयन्द-
श्छन्दो व्विष्टम्भोव्वयोधिपतिश्छंदोव्विश्वकर्म्माव्वयःप-
रमेष्ठीछन्दोवस्तोव्वयोव्विवलञ्छन्दोव्वृष्णिर्व्वयोव्विशाल-
ञ्छन्दः पुरुषोव्वयस्तन्द्रञ्छन्दोव्याघ्रोव्वयोनाधृष्टञ्छंदः सि-
र्ठ॑होव्वयश्छदिश्छन्दः पष्ठवाड्वयोबृहतीछन्दऽउक्षाव्वयः
ककुप्छन्दऽऋष्भोव्वयः सतोबृहतीछन्दोनड्वान्वयः ॥
॥ ९ ॥ अनड्वान्वयःपंक्तिश्छन्दोधेनुर्व्वयोजगतीच्छन्द-
स्त्र्यविर्व्वयस्त्रिष्टुपछन्दोदित्यवाड्वयोव्विराट्छन्दः पञ्चावि-
र्व्वयोगायत्रीच्छन्दस्त्रिवत्सोव्वयऽउष्णिक्छन्दस्तुर्य्यवाड्वयो
नुष्टुपछंदोलोकन्ताऽइन्द्रम् ॥ १० ॥ माच्छन्दः प्रमाच्छन्दः
प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दः पंक्तिश्छन्दऽउष्णिक्छ-
न्दोबृहतीछंदोनुष्टुपछंदोव्विराट्छंदोगायत्रीच्छन्दस्त्रिष्टुपछ-

न्दोजगतीच्छंदःपृथिवीच्छंदः ॥ ११ ॥ पृथिवीच्छन्दोन्त-
रिक्षञ्छन्दोद्यौश्छन्दः समाश्छन्दोनक्षत्राणिच्छन्दोव्वाक्छ
न्दोमनश्छंदः कृषिश्छन्दोहिरण्यञ्छन्दोगौश्छंदोजाच्छंदो-
श्वश्छंदः ॥ १२ ॥ अग्निर्देवताव्वातोदेवतासूर्य्योदेवताचं-
द्रमादेवताव्वसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवता
व्विश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवताव्वरुणोदेवता॥१३॥
एवश्छन्दोव्वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽ
आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः
समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छंदः काव्य-
ञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपंक्तिश्छ-
न्दो विष्टारपंक्तिश्छन्दः क्षुराभ्रजश्छन्दऽआच्छच्छन्दः
प्रच्छच्छन्दः ॥ १४ ॥ आच्छच्छन्दः प्रच्छच्छन्दः संय-
च्छंदोव्वियच्छन्दोबृहच्छंदोरथन्तरञ्छन्दोनिकायश्छन्दो-
व्विवधश्छन्दोगिरश्छंदोभ्राजश्छन्दः सुठंस्तुप्छंदोनुष्टु-
प्छन्दऽएवश्छन्दोव्वरिवश्छंदोव्वयश्छन्दोव्वयस्कृश्छं-
दोव्विष्पर्द्धाश्छन्दोविशालञ्छन्दश्छदिश्छन्दोदूरोहणञ्छ-

न्द्रस्तन्द्रञ्छन्दोऽअङ्काङ्कञ्छन्दः ॥ १५ ॥ रश्मिनासत्या-
यसत्यञ्जिन्वप्रेतिनाधर्मणाधर्मञ्जिन्वान्वित्यादिवादिवञ्जि-
न्व सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्वप्रतिधिनापृथिव्यापृथि-
वीञ्जिन्वविष्टम्भेनवृष्ट्यावृष्टिञ्जिन्वप्रवयान्हाहर्जिन्वानुया-
रात्र्यारात्रीञ्जिन्वोशिजावसुभ्योवसूञ्जिन्वप्रकेतेनादित्ये
भ्यऽआदित्याञ्जिन्वतन्तुना रायं ॥ १६ ॥ नन्तुनारायस्पो-
षेणरायस्पोषञ्जिन्वसँसर्पेण श्रुतायश्रुतञ्जिन्वैडेनौषधी-
भिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्ववयोधसाधीतेना-
धीतञ्जिन्वाभिजितातेजसा तेजोजिन्व ।१७॥प्रतिपदसिप्र-
तिपदेत्वानुपदस्यनुपदेत्वासम्पदसि सम्पदेत्वातेजोसितेज-
सेत्वात्रिवृदसि ॥१८॥ त्रिवृदसित्रिवृतेत्वाप्रवृदसिप्रवृतेत्वा-
विवृदसिविवृतेत्वासवृदसि सवृतेत्वाक्रमोस्याक्रमायत्वा-
सङ्क्रमोसिसङ्क्रमायत्वोत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्यु
त्क्रान्त्यैत्वाधिपतिनोर्जोर्जञ्जिन्व ॥१९॥ राज्ञ्यसिप्राची-
दिग्वसवस्तेऽदेवाऽअधिपतयोग्निर्हेतीनाम्प्रतिधर्तात्रिवृत्त्वा-
स्तोमः पृथिव्याँश्रयत्वाज्यमुक्थमव्यथायैस्तभ्नातु-

रथन्तरर्ठ॑ सामुप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथ-
मजादेवेषु दिवोमात्रयाव्वरिम्णाप्प्रथन्तुविधर्ताचायमधिप-
तिश्चतेत्त्वासर्व्वेसँव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमान-
ञ्चसादयन्तु ॥ २० ॥ व्विराडसिदक्षिणादिग्रुद्रास्तेदेवाऽ-
अधिपतयऽ इन्द्रोहेतीनांप्रतिधर्तापञ्चदशस्त्वास्तोमः पृथि-
व्व्याᳪश्रयतुप्रउगंमुक्थमव्यथायैस्तभ्नातुबृहत्सामम्प्रति-
ष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषु दिवोमात्रया
व्वरिम्णाप्प्रथस्तुव्विधर्ताचायमधिपतिश्च तेत्त्वासर्व्वेसव्वि-
दानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ २१ ॥ स-
म्म्राडसिप्प्रतीचीदिगादित्यास्तेदेवाऽअधिपतयोव्वरुणोहे-
तीनाम्प्रतिधर्तासप्तदश स्त्वास्तोमः पृथिव्व्याᳪश्रयतु म-
रुत्त्वतीयमुक्थमव्यथायैस्तभ्नातुव्वैरूपर्ठसामप्रतिष्ठित्या-
ऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णा
प्प्रथन्तु व्विधर्ता चायमधिपतिश्चतेत्त्वासर्व्वेसँव्विदानाना-
कस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ २२ ॥ स्वराडस्युदी-
चीदिङ् मरुतस्तेदेवाऽअधिपतयः सोमोहेतीनाम्प्रतिधर्तैक-

विꣳश स्त्वास्तोमः पृथिव्याꣳश्रयतुनिष्केवल्यमुक्थम-
व्यथायै स्तभ्नातु वैराजꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋ-
षयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विध-
र्त्ताचायमधिपतिश्चतेत्वासर्वेसँविदानानाकस्यपृष्ठेस्वर्गेलोके
यजमानञ्चसादयन्तु ॥२३॥ अधिपत्न्यसिबृहतीदिग्विश्वे-
तेदेवाऽअधिपतयो बृहस्पतिर्हेतीनाम्प्रतिधर्त्तात्रिणव त्रय-
स्त्रिꣳशौत्वास्तोमौपृथिव्याꣳश्रयतांवैश्वदेवाग्निमारुतेऽउ-
क्थेऽअव्यथायैस्तभ्नीताꣳशाक्वररैवतेसामनीप्प्रतिष्ठित्याऽ
अन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषु दिवोमात्रयाव्वरिम्णा-
प्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्वासर्वेसँव्विदानानाक-
स्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥२४॥ अयम्पुरोहरि-
केशꣳसूर्य्यरश्मिस्तस्यरथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ
पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौदङ्क्ष्णवः पशवो हेतिः
पौरुषेयोव्वधःप्रहेतिस्तेभ्यो नमोऽस्तुतेनोऽवन्तुतेनोमृडय-
न्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ २५ ॥ अय-
न्दक्षिणाव्विश्वकर्म्मातस्यरथस्वनश्च रथेचित्रश्चसेनानीग्रा-

मण्यौमेनकाचसहजन्याचाप्सरसौ यातुधानाहेतीरक्षाꣳसि
प्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मो
यश्चनो द्वेष्टितमेषाञ्जम्भेदध्मः ॥ २६ ॥ अयम्पश्चाद्विश्व-
व्यचास्तस्यरथप्प्रोतश्चासमरथश्चसेनानीग्रामण्यौप्प्रम्लोचन्ती
चानुम्लोचन्तीचाप्सरसौव्याघ्राहेतिꣳसर्पाꣳप्प्रहेतिस्तेभ्यो
नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनो द्वेष्टि-
तमेषाञ्जम्भेदध्मः ॥ २७ ॥ अयमुत्तरात्संयद्वसुस्तस्यता-
र्क्ष्यश्चारिष्टनेमिश्चसेनानीग्रामण्यौविश्वाचीचघृताचीचाप्स-
रसावापोहेतिर्व्वातꣳप्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनो
मृडयन्तु तेयन्द्विष्मो यश्चनो द्वेष्टितमेषाञ्जम्भे दध्मः ॥
॥ २८ ॥ अयमुपर्य्यर्वाग्वसुस्तस्य सेनजिच्चसुषेणश्च सेना-
नीग्रामण्यौऽउर्वशीचपूर्वचित्तिश्चाप्सरसावर्वस्फूर्ज्जन्हेतिर्वि-
द्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवंतुतेनोमृडयंतुतेयन्द्विष्मो
यश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ २९ ॥ ॐ सप्तऽऋषयꣳ-
प्प्रतिहिताः शरीरे सप्तरक्षन्तिसदमप्रमादम् । सप्तापः स्व-
पतोलोकमीयुस्तत्र जागृतोऽअस्वप्नजौसत्रसदौ च देवौ ॥

॥ ३० ॥ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥ ( वंशानां वाचनम् )

अथवꣳशः समानमासांजीवीपुत्रात्सांजीवीपुत्रो मांडूकाय-
नेर्मांडूकायनिर्मांडव्यान्मांडव्यꣳकौत्सात्कौत्सोमाहित्थेर्मा-
हित्थिर्व्वामकक्षायणाद्वामकक्षायणो व्वात्स्याद्वात्स्यꣳशां-
डिल्याच्छांडिल्यꣳकुश्रेः कुश्रिर्यज्ञवचसो राजस्तंबायनाद्यज्ञ-
वचा राजस्तंबायनस्तुरात्कावषेयात्तुरꣳकावषेयꣳप्रजापतेः
प्रजापतिर्ब्रह्मणो ब्रह्मस्वयंभुर्ब्रह्मणे नमः ॥ वं० ऋ० तृ० ॥१॥

अथव्वꣳशस्तदिदंवयꣳशौपर्णाय्याच्छौपर्णाय्योगौतमा-
द्गौतमो वात्स्याद्वात्स्यो व्वात्स्याच्चपाराशर्य्याच्चपाराशर्य्यः
सांकृत्याच्चभारद्वाजाच्च भारद्वाजऽऔदवाहेश्चशाण्डिल्याच्च
शाण्डिल्योवैजवापाच्च गौतमाच्चगौतमोवैजपायनाच्चव्वैष्टपु-
रेयाच्चव्वैष्टपुरेयꣳ शाण्डिल्याच्चरौहिणायनाच्चरौहिणायनꣳ
शौनकाच्चात्रेयाच्चरैभ्याच्च रैभ्यꣳपौतिमाष्यायणाच्च कौण्डि-
न्यायनाच्च कौण्डिन्यायनꣳकौण्डिन्यात्कौण्डिन्यꣳ कौण्डि-
न्यात्कौण्डिन्यꣳकौण्डिन्याच्चाग्निवेश्याच्च ॥२॥ अग्निवेश्यꣳ
सैतवात्सैतवꣳपाराशर्य्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यो

भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौत-
मो भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः कौशि-
कायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्या-
यणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्यो जातूकर्ण्याज्जा-
तूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च
चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्घनेरौपजन्घनिरासुरेरासु-
रिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ ३ ॥ आत्रेयादात्रेयो
माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः
शाण्डिल्याच्छांडिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः
कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डि-
न्याद्विदर्भीकौंडिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः
पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य
आङ्गिरसऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रा-
द्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्य-
ङ्ङाथर्व्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्रा-
ध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसनऽएकर्षेरेकर्षिर्विप्रचित्ते-

विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ वंशोक्ता ऋषयस्तृप्यंताम् ॥ ४ ॥ अथ वर्ठं शस्तदिदं वयर्ठं शौपर्ण्याच्छौपर्ण्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शांडिल्याच्च शांडिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शांडिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकायाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौंडिन्यायनाच्च कौंडिन्यायनः कौंडिन्याभ्यां कौंडिन्य औरणवाभेभ्य औरणवाभाः कौंडिन्यात्कौंडिन्यः कौंडिन्यात्कौंडिन्यः कौंडिन्याच्चाग्निवेश्याच्च ॥ ५ ॥ आग्निवेश्यः सैतवात्सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वलाकाकौशिकाद्वलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजङ्घनेरौपज-

ञ्घनिं सायकायनात्सायकायनं कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकं पाराशर्यायणात्पाराशर्यायणं पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजादासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्घनेरौपजन्घनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजोआत्रेयात् ॥ ६ ॥ आत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौतमोगौतमाद्गौतमोव्वात्स्याद्वात्स्यं शांडिल्याच्छांडिल्यं कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितोगालवाद्गालवो व्विदर्भीकौंडिन्याद्विदर्भीकौंडिन्यो व्वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवं पथः सौभरात्पन्थाः सौभरो यास्यादाङ्गिरसादयास्यऽआङ्गिरसऽ आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो व्विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विभ्यामश्विनौ दधीचऽआथर्व्वणाद्दध्यङ्ङाथर्वणो दैवादथर्व्वादैवो मृत्योः प्राध्वठंसनान्मृत्युः प्राध्वठंसनः प्रध्वठंसनात्प्रध्वठंसनऽएकर्षेरेकर्षिर्व्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिं सनारोः सनारुं सनातनात्सनातनं स-

नगात्सनगं परमेष्ठिनं परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ ७ ॥ अथ वर्ठंशस्तु दिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रं पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपुत्राद्गार्गीपुत्रं पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो वाडेयीपुत्राद्वाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रं पैङ्गीपुत्रात्पैङ्गीपुत्रं शौनकीपुत्राच्छौनकीपुत्रं ॥ ८ ॥ काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्या माठरीपुत्रं कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रं शालंकायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रं पाराशरीपुत्रात्पाराशरीपुत्रो वाकारुणीपुत्राद्वाकारुणीपुत्रऽआर्तभागीपुत्रादार्त्तभागीपुत्रं शौङ्गीपुत्राच्छौङ्गीपुत्रं साङ्कृतीपुत्रात्सांकृतीपुत्रं ॥ ९ ॥

आलम्बीपुत्रादालम्बीपुत्रऽआलम्बायनीपुत्रादालम्बायनी-
पुत्रोजायन्तीपुत्राज्जायन्तीपुत्रो मांडूकायनीपुत्रान्मांडूका-
यनीपुत्रो माण्डूकीपुत्रान्मांडूकीपुत्रः शाण्डिलीपुत्रा-
च्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकी-
पुत्राभ्यां क्रौञ्चिकीपुत्रो वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकी-
पुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सा-
ञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥
॥ १० ॥ प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रऽआसुराय-
णादासुरायणऽ आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दा-
लकादुद्दालकोरुणादरुणऽ उपवेशेरुपवेशिः कुश्रेः कुश्रि-
र्व्वाजश्रवसो वाजश्रवाज्जिह्वावतो बाध्योगाज्जिह्वावान्बा-
ध्योगोसिताद्वार्षगणादसितोव्वार्षगणो हरितात्कश्यपाद्ध-
रितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्य-
पान्नैध्रुवेः कश्यपोनैध्रुविर्व्वाचोव्वागम्भिण्याऽ अम्भिण्या
दित्यादादित्यानि मानिशुक्लानि यजूंषि व्वाजसनेयेन
याज्ञवल्क्येनाख्यायन्ते॥ ११ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

इमावेव गौतमभरद्वाजावयमेव गौतमोयं भारद्वाजऽइमा-वेवविश्वामित्रजमदग्नी अयमेवविश्वामित्रोयं जमदग्निरि-मावेव वसिष्ठकश्यपा वयमेववसिष्ठोयं कश्यपोवागेवा-त्रिर्वाचाह्यन्नमद्यतेतिहवै नामैतद्यदत्रिरिति सर्व्वस्यात्ता-भवति सर्व्वमस्यान्नम्भवति यऽएवंव्वेद ॥ १२ ॥ ब्राह्म-णोक्ता ऋषयस्तृप्यंताम् ॥ ॐ तत्सवितुरिति चतुर्वारं गायत्रीं पठेत् ॥ इति प्रति वंशवंशोक्तानामृषीणां तर्पणम् ॥ ततः सर्वे ॐ विरताः स्म इति सकृदुच्चैर्ब्रूयुः ॥

॥ अथाध्ययनक्रमः ॥

चत्वारिंशत् ४० अध्यायमंत्राः ॥ ॐ इषेत्वोर्जेत्वा वायवस्थदेवोवः सविता प्रार्पयतुश्रेष्ठतमायकर्मणऽआप्या-यध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावे-स्तेनऽईशतमा घशंठ्सोध्रुवाऽअस्मिन्गोपतौस्यातबह्वी-र्यजमानस्य पशून्पाहि ॥ १ ॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वाजुष्टम्प्रोक्षामि ॥ वेदिरसि बर्हिषेत्वाजुष्टम्प्रोक्षामिबर्हि-रसिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि ॥ २ ॥ समिधाग्निन्दुवस्य-

तघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ ३ ॥ एद मगन्मदेवयजंनम्पृथिव्यायत्रदेवासोऽअजुषन्त विश्वेऽऋक्सामाभ्यांᳬसन्तरन्तोयजुर्भीरायस्पोषेण समिषामदेमऽइमाऽआपःशमुमे सन्तु देवीरोषधे त्रायस्व स्वधितेमैनᳬहिᳬसीः ॥ ४ ॥ अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवेत्वाश्येनायत्वासोमभृतेविष्णवेत्वाग्नयेत्वारायस्पोषदेविष्णवेत्वा ॥ ५ ॥ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददेनार्यसिइदमहᳬरक्षसांग्रीवाअपिकृन्तामि ॥ यवोसियवयास्मद्द्वेषोयवयारातीः ॥ दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥ ६ ॥ वाचस्पतयेपवस्ववृष्णो अᳬशुभ्याङ्गभस्तिपूतोदेवोदेवेभ्यः पवस्वयेषाम्भागोऽसि ॥ ७ ॥ उपयामगृहीतोस्यादित्येभ्यस्त्वाविष्णऽउरुगायैपतेसोमस्वᳬरक्षस्वमात्वादभन् ॥ ८ ॥ देवसवितः प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वः केतपूः केतन्नः पुना-

तुवाचस्पतिर्वाजन्नꣳ स्वदतु स्वाहा ॥ ९ ॥ अपोदेवा-
मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाꣳ ॥ याभिर्मित्रा-
वरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीꣳ ॥ १० ॥
युञ्जानꣳ प्रथमम्मनस्तत्त्वायसविताधियं । अग्नेर्ज्योतिर्नि-
चाय्यपृथिव्याऽअध्याभरत ॥ ११ ॥ दृशानोरुक्मऽ-
उर्व्याव्यद्यौद्दुर्मर्षमायुः श्रियेरुचानꣳ ॥ अग्निरमृतोऽ अभ-
वद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥ १२ ॥ मयि गृह्णाम्य-
ग्रेऽअग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय मामु
देवताꣳसचन्ताम् ॥ १३ ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि
ध्रुवँय्योनिमासीदसाधुया ॥ उख्यस्यकेतुम्प्रथमञ्जुषा-
णाऽअश्विनाध्वर्यूसादयतामिहत्वा ॥ १४ ॥ अग्ने
जातान्प्रणुदानꣳ सपत्नान् प्रत्यजातान्नुदजातवेदꣳ ॥ अधि
नोब्रूहि सुमनाऽ अहेडँस्तवस्यामशर्मꣳ स्त्रिवरूथऽ
उद्भौ ॥ १५ ॥ नमस्ते रुद्र मन्यवऽउतोतऽइषवेनमः ॥
बाहुभ्यामुतते नमः ॥ १६ ॥ अश्मन्नूर्जं पर्वते शिश्रियाणा-
मद्भ्यऽओषधीभ्यो वनस्पतिभ्योऽअधिसम्भृतम्पयः ॥

तान्नूऽइषंमूर्जन्धत्त मरुतःसर्ठःराणाऽ अश्मंस्तेक्षुन्म-
यितऽऊर्ग्यद्विष्मस्तन्तेशुगृच्छतु ॥ १७ ॥ व्वाजश्चमेप्रस-
वश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लो-
कश्चमेश्रावश्चमेश्रुतिश्चमेज्योतिश्चमेस्वश्चमे यज्ञेनकल्प-
न्ताम् ॥ १८ ॥ स्वाद्वीन्त्वास्वादुनातीव्रान्तीव्रेणामृताम-
मृतेन । मधुमतीम्मधुमतासृजामिसर्ठःसोमेन सोमोऽस्य-
श्विभ्याम्पच्यस्वसरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व॥
॥ १९ ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसिमात्वाहिर्ठःसी-
न्मामाहिर्ठःसीः ॥ २० ॥ इमम्मेव्वरुणश्रुधीहवमद्याचमृ-
डयत्वामवस्युराचके ॥ २१ ॥ तेजोऽसि शुक्रममृतमायु-
ष्पाऽआयुर्मेपाहि ॥ देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहु-
भ्याम्पूष्णो हस्ताभ्यामाददे ॥ २२ ॥ हिरण्यगर्भःसमवर्त-
ताग्रेभूतस्यजातःपतिरेकऽ आसीत् ॥ सदाधारपृथिवी-
न्द्यामुतेमाङ्कस्मैदेवायहविषा विधेम ॥ २३ ॥ अश्वस्तू-
परोगोमृगस्तेप्राजापत्याः ॥ कृष्णग्रीवऽआग्नेयो रराटेपुर-
स्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौबाह्वोः

सौमापौष्णः श्यामोनाभ्याᳪसौर्य्यायामौश्वेतश्चकृष्णश्च
पार्श्वयोस्त्वाष्ट्रौलोमशसक्थौसक्थ्योर्वायव्यः श्वेतःपुच्छऽ
इन्द्रायस्वपस्यायवेहद्वैष्णवोवामनः ॥ २४ ॥ शादन्द
द्भिरवकान्दन्तमूलैर्मृदम्बर्स्वैस्तेगान् दᳪष्ट्राभ्याᳪसरस्व-
त्याऽअग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देनतालुव्वाजᳪहनु-
भ्यामपआस्येनवृषणमाण्डाभ्यामादित्याँश्मश्रुभिः पन्था-
नम्भ्रूभ्यान्द्यावापृथिवीवर्तोभ्याँव्विद्युतङ्कनीनकाभ्या ᳪ
शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्याऽ
इक्षवोऽवार्याणि पक्ष्माणि पार्याऽ इक्षवः ॥२५॥ अग्निश्च
पृथिवीच सन्नतेतेमेसन्नमतामदो वायुश्चान्तरिक्षञ्चसन्नतेते
मेसन्नमतामदऽ आदित्यश्च द्यौश्च सन्नतेतेमेसन्नमतामदऽ
आपश्च वरुणश्चसन्नतेतेमेसन्नमतामदः ॥ सप्तसᳪसदोअष्ट-
मीभूतसाधनी ॥ सकामा २ अध्वनस्कुरुसञ्ज्ञानमस्तुमेऽ
मुना ॥ २६ ॥ समास्त्वाग्नऽऋतवोवर्धयन्तुसम्वत्सराऋ-
षयोयानिसत्या ॥ सन्दिव्येनदीदिहिरोचनेनविश्वाऽआभा-

हिप्रदिशश्चतंस्रः ॥ २७ ॥ होतायक्षत्समिधेन्द्रमिडस्पदे-
नाभापृथिव्याऽ अधि ॥ दिवोवर्ष्मन्त्समिध्यतओऽ जिष्ठ-
श्चर्षणीसहाम्वेत्वाज्यस्यहोतर्यज ॥ २८ ॥ समिद्धोऽअञ्ज-
न्कृदरम्मतीनाङ्घृतमग्नेमधुमत्पिन्वमानः ॥ वाजी वहन्वाजि-
नञ्जातवेदोदेवानांव्वक्षिप्रियमासधस्थम् ॥ २९ ॥ देवंसवि-
तः प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वः केतपूः
केतन्नः पुनातुवाचस्पतिर्वाचन्नः स्वदतु ॥ ३० ॥ सहस्र-
शीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंसर्वतस्पृत्वा-
त्यतिष्ठद्दशाङ्गुलम् ॥ ३१ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु-
चन्द्रमाः ॥ तदेवशुक्रन्तद्ब्रह्मतदाऽआपःस्तत्प्रजापतिः ॥ ३२ ॥
अस्याजरासोदमामरित्राऽअर्चद्धूमासोऽअग्नयः पावकाः ॥
श्वितीचयः श्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ ३३ ॥
यज्जाग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्यो-
तिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ३४ ॥ अपे-
तोयन्तु पणयो सुम्नादेव पीयवः ॥ अस्य लोकः सुतावतः ॥
द्युभिरहोभिरक्तुभिर्व्यक्तँय्यमोददात्ववसानमस्मै ॥ ३५ ॥

ऋचँव्वाचम्प्रपद्ये मनोयजुःप्रपद्येसामम्प्राणम्प्रपद्ये चक्षुः
श्रोत्रम्प्रपद्ये वागोजः सहौजोमयि प्राणापानौ ॥३६॥ देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥आद-
देनारिरसि ॥ ३७॥ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहु-
भ्याम्पूष्णोहस्ताभ्याम् ॥ आददेऽदित्यैरास्नासि ॥ ३८॥
स्वाहा प्राणेभ्यः साधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वा-
हान्तरिक्षायस्वाहा ॥ वायवेस्वाहादिवेस्वाहासूर्य्यायस्वा-
हा ॥ ३९ ॥ ईशावास्यमिदर्ठसर्वय्यत्किञ्चजगत्याञ्जगत् ॥
तेनत्यक्तेनभुञ्जीथामागृधः कस्यस्विद्धनम् ॥ ४० ॥ हिर-
ण्मयेनपात्रेणसत्यस्यापिहितम्मुखम् ॥ योसावादित्येपुरुषः
सोऽसावहम् ॥ ४१ ॥ ॐ २ खम्ब्रह्म । अध्यायोक्ता ऋषय-
स्तृप्यन्ताम् ॥

अथ शतानि ॥ ॐ इषेत्वोर्जेत्वा० ॥ १ ॥ परितिधन्व-
नोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयइषुधिस्तवारेऽअ-
स्मन्निधेहितम् १६ । १२ ॥ २ ॥ अग्नेनयसुपथारायेऽअ-
स्मान्विश्वानि देववयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुरा-

णमेनोभूयिष्ठान्तेनमऽउक्तिंव्विधेम ५ । ३६ ॥ ३ ॥ उप-
यामगृहीतोसिसुशर्मासिसुप्रतिष्ठानोबृहदुक्षायनमः ॥विश्वे-
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ८ । ८॥
४ ॥ सोमस्यत्विषिरसितवेवमेत्विषिर्भूयात् । मृत्योः पा-
हिऽओजोसिसहोस्यमृतमसि १० । ५ ॥ ५ ॥ परस्याऽ
अधि सँव्वतो वराँ २ ॥ ऽअभ्यन्तरं ॥ यत्राहमस्मि ताँ २ ॥
ऽअव ॥ ११ । ७१ ॥ ६ ॥ अन्यावोऽअन्यामवत्वन्या-
न्यस्याऽउपावत ॥ ताः सर्वाः सँव्विदानाऽइदम्मेप्रावता-
व्वचः १२ । ८८ ॥ ७ ॥ राज्ञ्यसिप्राचीदिग्विराडसि
दक्षिणादिक्सम्राडसिप्रतीचीदिक्स्वराडस्युदीचीदिगधिप-
त्न्यसिबृहतीदिक् १४॥१३॥८॥ नमो हिरण्यबाहवे सेना-
न्ये दिशाञ्चपतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशू-
नाम्पतये नमोनमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये
नमोनमोहरिकेशायोपवीतिने पुष्टानाम्पतये नमोनमोब-
भ्लुशाय १६ । १७ ॥ ९ ॥ इन्द्रेमम्प्रतरान्नयसजातानां-
मसद्वशी ॥ समेनँव्वर्चसासृजदेवानाम्भागदाऽअसत् ॥ १७॥

५१ ॥ १० ॥ इमौतैपक्षावजरौपतत्रिणौ याभ्याᳬरक्षाᳬ स्यपहᳬस्यग्ने ॥ ताभ्यांपतेमसुकृतामुलोकंयत्रऽऋषयो जग्मुः प्रथमजाः पुराणाः ॥ १८ ॥ ९२ ॥ ११ ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणा० ॥ १९ ॥ ७५ ॥ १२ ॥ अश्विना तेजसाचक्षुः प्राणेनसरस्वतीवीर्यम् ॥ वाचेन्द्रोबलेनेन्द्राय दधुरिन्द्रियम् २० ॥ ८० ॥ १३ ॥ पृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहासूर्यायस्वाहाचन्द्रायस्वाहा नक्षत्रेभ्यः स्वाहौषधीभ्यः स्वाहावनस्पतिभ्यः स्वाहापरिप्लवेभ्यः स्वाहाचराचरेभ्यः स्वाहासरीसृपेभ्यःस्वाहा ॥ २२॥२९॥ ॥ १४ ॥ प्रजापतयेचवायवेच गोमृगोवरुणायारण्योमेषो यमायकृष्णो मनुष्यराजाय मर्कटः शार्दूलायरोहिदृषभाय गवयीक्षिप्रश्येनाय वर्तिकानीलङ्गोः कृमिः समुद्रायशिशुमारोहिमवतेहस्ती २४ । ३० ॥ १५ ॥ तेऽअस्यथोषणेदिव्येनयोनांऽउषासानक्ता ॥ इमंयज्ञमवतामध्वरन्नः २७ । १७ ॥ १६ ॥ तनूनपात्पथऽऋतस्ययानान्मध्वासमञ्जन्स्वदयासुजिह्वमन्मानिधीभिरुतयज्ञमृध्नन्देवत्राचकृणु

ह्याध्वरन्नः २९ । २६ ॥ १७ ॥ अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानोभृगवोविरुरुचुर्वनेषु चित्रँ विभ्वँविशेविशे ॥ ३३ । ६ ॥ १८ ॥ अनुनोऽद्यानुमतिर्यज्ञन्देवेषु मन्यताम् ॥ अग्निश्च हव्यवाहनो भवतन्दाशुषे मयः ॥ १९ ॥ इयत्यग्रऽआसीन्मखस्य तेद्य शिरोराध्यासन्देवयजने पृथिव्याः ॥ मखायत्वा मखस्यै त्वा शीर्ष्णे ३७ । ६ ॥ २० ॥

अथ काण्डिकाः ॥ व्रतमुपैष्यन् ॥ १ ॥ सवैकपालान्यवान्यतरऽउपदधाति ॥ २ ॥ सवैस्रुचःसम्मार्ष्टि ॥ ३ ॥ हिङ्कृत्यान्वाह ॥ ४ ॥ सवैप्रवरायाश्रावयति ॥ ५ ॥ ऋतवोहवैदेवेषुयज्ञेभागमीषिरे ॥ ६ ॥ सवैपर्णशाखयावत्सानपाकरोति ॥ ॥ ७ ॥ मनवेहवैप्रातः ॥ ८ ॥ ससत्राह ॥ ९ ॥ सुसंयुद्धाइतश्चेतश्चसम्भरन्ति ॥ १० ॥ उद्धृत्याहवनीयम्पूर्णाहुतिं जुहोति ॥ ११ ॥ सूर्योहवाऽअग्निहोत्रम् ॥ १२ ॥ अथहुतेऽग्निहोत्रऽउपतिष्ठते ॥ १३ ॥ प्रजापतिर्हवाऽइदमग्र एकऽएवास ॥ १४ ॥ पितामहाहविषाह वैदेवाव्वृत्रञ्जघ्नुः ॥ १५ ॥ देव-

यजनञ्जोषयन्ते ॥ १६ ॥ दक्षिणेनाहवनीयंप्राचीनग्रीवेकृ-
ष्णाजिनेऽउपस्तृणाति ॥ १७ ॥ सप्तपदान्यनुनिष्क्रामति
॥ १८ ॥ शिरो वैयज्ञस्यातिथ्यंबाहूप्रायणीयोदयनीयौ ॥
॥ १९ ॥ तद्यऽएषपूर्वार्ध्योवर्षिष्ठस्थूणराजोभवति ॥ २० ॥
उदरमेवास्यसद॒ ॥ २१ ॥ अग्निमादत्ते ॥ २२ ॥ तद्यत्रै-
तत्प्रवृत्तोहोताहोतृषदनऽ उपविशति ॥ २३ ॥ प्रजापतिर्वै
प्रजाः ससृजानोरिरिचानऽ इमामन्यत ॥२४॥ प्राणोहवाऽ
अस्योपाꣳशुः ॥२५॥ चक्षुषीहवाऽअस्यशुक्रामन्थिनौ ॥
॥२६॥ भक्षयित्वासमुपहूताः स्मऽइत्युक्त्वोत्तिष्ठति ॥२७॥
मनोहवाऽअस्यसविता ॥ २८ ॥ आदित्येन चरुणोदयनी-
येन प्रचरति ॥ २९ ॥ प्रजापतिर्वाऽएषयदꣳशुः ॥ ३० ॥
देवाश्च वाऽअसुराश्च ॥३१॥ अथ स्रुवञ्चाज्यविलापनीं चा-
दाय ॥३२॥ अरण्योरग्नीसमारोह्य ॥ ३३ ॥ केशवस्य पुरु-
षस्य ॥ ३४ ॥ आग्नेयोष्टाकपालः पुरोडाशो भवति ॥ ३५ ॥
असद्वाऽइदमग्रऽआसीत् ॥ ३६ ॥ प्रजापतिरग्निरूपाण्यभ्य-
धारयत ॥ ३७ ॥ द्वितीयम् ॥ एतद्वै देवाऽअब्रुवन् ॥ ३८ ॥

अथैनमतᳪंखनत्येव ॥ ३९ ॥ पर्णकषाय निष्पक्वाऽएताऽ
आपो भवन्ति ॥ ४० ॥ भूयाᳪंसि हवीᳪंषि भवन्ति ॥
॥ ४१ ॥ रुक्मम्प्रतिमुञ्चबिभर्त्ति ॥ ४२ ॥ त्वनीवाह्येताग्निं
बिभ्रदित्याहुः ॥ ४३ ॥ गार्हपत्यं चेष्यन्पलाशशाखया-
व्युदूहति ॥ ४४ ॥ अथातोनैर्ऋतिर्हरति ॥ ४५ ॥ चितोगा-
र्हपत्योभवति ॥ ४६ ॥ आत्मन्यग्निंगृह्णीतेचेष्यन् ॥ ४७ ॥
कूर्म्मसमुपदधाति ॥ ४८ ॥ प्राणभृतउपदधाति ॥ ४९ ॥ द्विती-
यांचितिमुपदधाति ॥ ५० ॥ तृतीयांचितिमुपदधाति ॥ ५१ ॥
चतुर्थीं चितिमुपदधाति ॥ ५२ ॥ पंचमीं चितिमुपदधाति ॥
॥ ५३ ॥ नाकसदऽउपदधाति ॥ ५४ ॥ ऋतव्याऽउपदधाति ॥
॥ ५५ ॥ अथातः शतरुद्रियञ्जुहोति ॥ ५६ ॥ उपवसथी-
वेहन्प्रातरुदितऽआदित्ये ॥ ५७ ॥ अथातोवैश्वानरञ्जु-
होति ॥ ५८ ॥ अथातो राष्ट्रभृतो जुहोति ॥ ५९ ॥ अथातः-
पयोव्रततायै ॥ ६० ॥ अग्निरेषपुरस्ताच्चीयते ॥ ६१ ॥ प्रजा-
पतिःस्वर्गलोकमजिगाᳪंसत् ॥ ६२ ॥ प्राणोगायत्री ॥ ६३ ॥
प्रजापतिंविस्रस्तम ॥ ६४ ॥ तस्यवाऽएतस्याग्नेः ॥ ६५ ॥

अथहैतेरुणे ॥ ६६ ॥ सँवत्सरोवैयज्ञःप्रजापतिः ॥ ६७ ॥
त्रिर्हवैपुरुषोजायते ॥ ६८ ॥ व्वाग्घवाऽएतस्याग्निहोत्रस्या-
ग्निहोत्री ॥६९॥ उद्दालकोहारुणिः ॥७०॥ उर्वशीहाप्सराः॥
॥ ७१ ॥ भृगुर्हवैवारुणिः ॥ ७२ ॥ पशुबन्धेन यजते ॥
॥ ७३ ॥ तद्यथाह वै ॥ ७४ ॥ अयं वै यज्ञो योयं पवते ॥
॥ ७५ ॥ समुद्रँवव्वाऽएते प्रचरन्ति ॥ ७६ ॥ यद्वालोके ॥
॥ ७७ ॥ दीर्घसत्रर्ठंहवाऽएतऽउपयन्ति ॥ ७८ ॥ तदाहुर्य-
देषदीर्घसत्री ॥ ७९ ॥ सोमो वै राजा यज्ञःप्रजापतिः ॥
॥ ८० ॥ व्विश्वरूपँव्वै त्वाष्ट्रमिन्द्रोहन् ॥ ८१ ॥ इन्द्रस्य
वै यत्र ॥ ८२ ॥ एतस्माद्वै यज्ञात्पुरुषो जायते ॥ ८३ ॥
ब्रह्मौदनं पचति ॥ ८४ ॥ प्रजापतिर्देवेभ्यो यज्ञान् व्यादि-
शत् ॥ ८५ ॥ प्रजापतेरक्ष्यश्वयत् ॥८६॥ उत्तमंप्रजापति-
रकामयत् ॥८७॥ अथप्रातर्गोतमस्य ॥ ८८ ॥ पुरुषोहना-
रायणोकामयत् ॥ ८९ ॥ ब्रह्म वैस्वयंभुतपोतप्यत् ॥ ९० ॥
अथास्मैश्मशानंकुर्वन्तिद्यौःशान्तिः ॥ ९१ ॥ देवाहवैस-
त्रंनिषेदुः ॥ ९२ ॥ अथातोरौहिणोजुहोति ॥ ९३ ॥ सवै

तृतीयेहन् ॥ ९४ ॥ द्व्याहप्राजापत्याः ॥ ९५ ॥ द्दप्तवा- लाकिर्हानूचानोगार्ग्यऽआस ॥९६॥ जनकोहवैदेहः ॥९७॥ जनकर्ठ्ठ हवैदेहँय्याज्ञवल्क्यौ जगाम ॥ ९८ ॥ पूर्णमदः- पूर्णमिदम् ॥ ९९ ॥ श्वेतकेतुर्हवाऽआरुणेयः ॥ १०० ॥ प्राश्नीपुत्रादासुरिवासिनः ॥ चतुर्दशकाण्डेष्वध्यायोक्ता ऋषय- स्तृप्यन्ताम् ॥

अथ प्रपाठकाः । व्रतमुपैरुय्यन् ॥ १ ॥ चतुर्द्धा विहितो- हवाऽअग्नेग्निरास ॥२॥ तेवाऽआर्द्रार्ᳬस्युः ॥३॥ सम्रुचोत्तर- माघारमाघारयिष्यन् ॥४॥ यज्ञेनवैदेवाः ॥५॥ यज्ञेनवै- देवादिवमुपोदक्रामन् ॥ ६ ॥ सर्वैस्रुचौव्यूहति ॥ ७ ॥ सय- द्वाऽइतश्चेतश्चसम्भरति ॥ ८ ॥ वरुणोहैनर्ठ राज्यकामऽ आदधे ॥ ९ ॥ यत्रवैप्रजापतिः प्रजाः ससृजे ॥ १० ॥ प्रजापतिर्हवाऽएतेनाग्नेयेनयज्ञेनेजे ॥ ११ ॥ महाहविषाह- वैदेवावृत्रञ्जघ्नुः ॥ १२ ॥ देवयजनञ्जोषयन्ते ॥ १३ ॥ वाचँय्यच्छति ॥ १४ ॥ नीडेकृष्णाजिनमास्तृणाति ॥ ॥१५॥ तद्वाऽएषपूर्वोय्योंवर्षिष्ठस्थूणाराजोभवति ॥१६॥

न्विजा मानोहैवास्यधिष्ण्याः ॥ १७ ॥ पाशे कृत्वा प्रति-
मुञ्चति ॥ १८ ॥ सौत्युपसजति ॥ १९ ॥ प्राणो ह्वाऽअ-
स्योपाᳬंशुः ॥२०॥ आत्मा ह वाऽअस्याग्रयणः ॥२१॥
घ्नन्ति वाऽएतद्यज्ञम् ॥ २२ ॥ स वा ऽअवभृथमभ्यवैति ॥
॥२३॥ तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते ॥२४॥
देवाश्च वाऽअसुराश्च ॥ २५ ॥ बार्हस्पत्येन चरुणा प्रच-
रति ॥ २६ ॥ सवाऽअपः सम्भरति ॥ २७ ॥ मैत्रावरु-
ण्यापयस्य या प्रचरति ॥ २८ ॥ असद्वाऽइदमग्रऽआ-
सीत् ॥ २९ ॥ प्राजापत्यंचरंकाआ लम्भते ॥ ३० ॥ प्रदी-
प्ताऽएतेग्नयोभवन्ति ॥ ३१ ॥ तस्याऽएतस्याऽआषाढां
पूर्वांकरोति ॥ ३२ ॥ रुक्मंप्रतिमुञ्चबिभर्ति ॥ ३३ ॥ गार्ह-
पत्यंचेष्यन्पलाशशाखयाव्युदूहति ॥ ३४ ॥ अथदर्भ-
स्तम्बमुपदधाति ॥ ३५ ॥ आत्मन्नग्निंगृह्णीतेचेष्यन् ॥
॥ ३६ ॥ कूर्ममुपधाति ॥ ३७ ॥ प्राणभृतउपदधाति ॥
॥ ३८ ॥ अथ विश्वज्ज्योतिषमुपदधाति ॥ ३९ ॥
अथातोन्वावृतम् ॥ ४० ॥ गार्हपत्यमुपदधाति ॥ ४१ ॥

अथातःशतरुद्रियञ्जुहोति ॥ ४२ ॥ प्रत्येत्याग्निम्प्रहरिष्यन् ॥ ४३ ॥ अथैतान्यज्ञक्रतूञ्जुहोति ॥ ४४ ॥ अथ प्रातःप्रातरनुवाकमुपाकरिष्यन् ॥ ४५ ॥ अग्निरेषपुरस्ताच्चीयते ॥ ४६ ॥ अथातश्चयनस्यैव ॥ ४७ ॥ सवत्सरोवैप्रजापतिरग्निः ॥ ४८ ॥ नेववाऽइदमग्रेसदासीन्नेवसदासीत् ॥ ४९ ॥ सँव्वत्सरोवैयज्ञः प्रजापतिः ॥ ५० ॥ अपिहवाऽएतर्हि ॥ ५१ ॥ प्रजापतिर्वै प्रजाः सृजमानोतप्यत ॥ ५२ ॥ अथातः स्वाध्यायप्रशर्ठ॑सा ॥ ५३ ॥ अयँव्वैयज्ञोयोयंपवते ॥ ५४ ॥ पुरुषर्ठ॑हनारायणंप्रजापतिरुवाच ॥ ५५ ॥ सोमोवैराजायज्ञःप्रजापतिः ॥ ५६ ॥ प्रजापतिर्यज्ञमसृजत ॥ ५७ ॥ ब्रह्मौदनपचति ॥ ५८ ॥ नियुक्तेषुपशुषु ॥ ५९ ॥ प्रमुच्याश्वं दक्षिणेन वेदिम् ॥ ६० ॥ पुरुषो ह नारायणोऽकामयत् ॥ ६१ ॥ देवा ह वै सत्रन्निषेदुः ॥ ६२ ॥ सप्तहोतारंहोतान्वाह ॥ ६३ ॥ द्वयाह प्राजापत्याः ॥ ६४ ॥ दृप्तबालाकिर्हानूचानोगार्ग्यऽआस ॥ ६५ ॥ अथ हैनम्भुज्युर्लाह्यायनिः पप्रच्छ ॥६६॥

जनकुꣳहवैदेहꣳयाज्ञवल्क्यो जगाम ॥ ६७ ॥ भूमिरन्त-
रिक्षन्द्यौरिति ॥ ६८ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ ६९ ॥

इति चतुर्दशकांडे प्रपाठोक्ता ऋषयस्तृप्यन्ताम् ॥ इति प्रपाठकाः ॥

अथ शतस्थानानि ॥ व्रतमुपैष्यन् ॥ १ ॥ तद्वदेवुपिनष्टि ॥
॥ २ ॥ अथाजलिप्ताभ्यांपवित्राभ्याम् ॥ ३ ॥ बृहच्छो-
चायविष्ठचेति ॥ ४ ॥ व्वसूनाꣳरात्रौस्याम ॥ ५ ॥
अग्निर्वैदेवानामद्धातमाम् ॥ ६ ॥ तद्यथासोनौरेतः सिञ्चेत्
॥ ७ ॥ तांव्वैप्राश्नन्त्येव ॥ ८ ॥ अथव्वेदपत्नीव्विस्रꣳस-
यति ॥ ९ ॥ अयꣳव्वैयज्ञोयोयंपवते ॥ १० ॥ अथयदस्त-
मेति ॥ ११ ॥ रेवतीरमध्यमिति ॥ १२ ॥ सवाऽ आग्ने-
योष्टाकपालः पुरोडाशोभवति ॥ १३ ॥ तद्येसोमेनेजानाः ॥
॥ १४ ॥ अथोत्तरेण शालांपरिश्रयन्ति ॥ १५ ॥ अथो-
ल्लिखति ॥ १६ ॥ सायाबभ्रुः पिङ्गाक्षीसासोमक्रयणी
स्यात् ॥ १७ ॥ प्रथमन्तेदेवाः ॥ १८ ॥ इंद्रघोषः प्रोक्ष-
णीरध्वर्य्युरादत्ते ॥ १९ ॥ साहाकद्रूरुवाच ॥ २० ॥
तद्युऽएतउच्छ्रिताहदेवाहवैयज्ञन्तन्वानाः ॥ २१ ॥ अथपा-

श्वैनवासिनावाप्रयौति ॥ २२ ॥ सजुहोतिशृणोत्वग्निः समिधाहवंमऽइति ॥ २३ ॥ इयठंह्वाऽउपाठंशुः ॥२४॥ तस्यासावेवध्रुवऽआयुः ॥ २५ ॥ सत्रद्यावापृथिव्यर्ठंश-स्यते ॥ २६ ॥ सऽ आज्यस्योपस्तीर्यद्विश्वरोरवद्यति ॥ ॥ २७ ॥ इन्द्रोहवैषोडशी ॥ २८ ॥ तासां द्वादशगर्भाः ॥ ॥ २९ ॥ द्वितीयातद्येहस्मपुराव्वाजपेयेनयजते ॥ ३० ॥ अथ दिशोनुवीक्ष्यमाणो जपति ॥ ३१ ॥ स वै दीक्षते ॥ ॥३२॥अथैतमभिषेकं कृष्णविषाणयानुविमृष्टे ॥ ३३ ॥ षडेवोत्तरेचरवः ॥ ३४ ॥ अथोऽआहुः प्रजापतिरेवविस्रस्त ॥ ३५ ॥ अमावास्यायां दीक्षते ॥ ३६ ॥ अश्वस्य पदे जुहोति ॥ ३७ ॥ अथैनांधूपयति ॥ ३८ ॥ तमुपरिनाभि-बिभर्ति ॥ ३९ ॥ अथोखान्निवपति ॥ ४० ॥ द्वितीयाचु-तस्रः सीतायजुषाकृषति ॥ ४१ ॥ तंप्रत्यंचयन्तम् ॥४२॥ अपाङ्गभत्सीदेति ॥ ४३ ॥ तस्यमनोव्वैश्वकर्मणमिति ॥ ४४ ॥ तद्यैषामध्यमास्व यामातृष्णा ॥ ४५ ॥ एका-दशभिरस्तुवतेति ॥ ४६ ॥ तावाऽएकादशेष्टकाऽउपद-

धाति ॥ ४७ ॥ अथस्वयतृणमुपदधाति ॥ ४८ ॥ अथा-
त्तरार्द्धेन प्राक् ॥ ४९ ॥ ससः सुव्वैश्वानरऽइमेसलाकाः ॥
॥ ५० ॥ यास्तेऽअग्नेसूयैरुच ॥ ५१ ॥ नामकृत्वाथनमु-
पतिष्ठते ॥ ५२ ॥ यावाऽइयंवेदिः सप्तविधस्य ॥ ५३ ॥
अयमेवाकाशोजूः ॥ ५४ ॥ सोयमात्मात्रेधाविहित एव
॥ ५५ ॥ अथवर्ठंशः ॥ ५६ ॥ अथसामेतामाहुतिंजु-
होति ॥ ५७ ॥ अथसदनुवाक्यामनूच्य ॥ ५८ ॥ ब्रह्म-
चार्यसीत्याह ॥ ५९ ॥ ससतपशुबन्धेनसुजतेऽग्नीनेवैतत्पु-
नर्नवाकुरुते ॥ ६० ॥ दशेति होवाच ॥ ६१ ॥ अथसत्र-
स्कन्नर्ठंस्यात् ॥ ६२ ॥ अथसदिप्रप्लुतः ॥ ६३ ॥ सर्वेऽ-
आश्विनाभवन्ति ॥ ६४ ॥ प्रजापतिर्यज्ञमसृजत् ॥ ६५ ॥
किंवावपनंमहदिति ॥ ६६ ॥ अथसोस्यनिष्कःप्रतिमुक्तो-
भवति ॥ ६७ ॥ एतेनहेन्द्रोतोदेवापःशौनकः ॥ ६८ ॥
चतस्रःसीतायजुषाकृषति ॥ ६९ ॥ अथोत्तरतः सिकताऽ-
उपकीर्णाभवन्ति ॥ ७० ॥ अथ रौहिणौ जुहोति ॥७१॥
तदेवाऽ अब्रुवंस्तावद्वाऽइदर्ठंसर्वं यदन्तम ॥ ७२ ॥ तानि

यदा गृह्णाति ॥ ७३ ॥ योग्नौतिष्ठन् ॥ ७४ ॥ कतम आत्मेति ॥ ७५ ॥ अथ हैनं मनुष्या ऊचुः ॥ ७६ ॥ अथ यामिच्छेद्गर्भन्दधीतेति ॥ ७७ ॥ सप्तसहस्रषट्शतशेषं चतुर्विंशतिः ॥ ७८ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ ७९ ॥

इति चतुर्दशकाण्डे शतोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ व्रतं विसृजते ॥ १ ॥ सयास्मिन्हर्तामँल्लोकमेति ॥ ॥ २ ॥ अथ निग्राभ्यो ग्रहान् विगृह्णते ॥ ३ ॥ अथ गृहपतिः सुब्रह्मण्यामाह्वयति ॥ ४ ॥ ता वाऽएताः ॥ ५ ॥ तानिदशभवन्ति ॥ ६ ॥ ताऽएताऽअंगुलयः ॥ ७ ॥ मध्यमेवतृतीयांचितिः ॥ ८ ॥ सहोवाच ॥ ९ ॥ अथव्वर्ठंशः ॥ ॥ १० ॥ तस्माउहैतदुवाच ॥ ११ ॥ सवाऽएषऽआत्मैवयत्सौत्रामणिः ॥१२॥ मर्यादायाऽएवलोष्टमाहृत्य ॥१३॥ प्राश्नीपुत्रादासुरीवासिनः ॥ १४ ॥ इति अंत्यकण्डिकोक्ता ऋषयस्तृप्यताम् ॥

एवंव्रतंविसृजेत् ॥ १ ॥ परमांगतिङ्गच्छतीति ॥ २ ॥ तस्माद्धोतृचमसात् ॥ ३ ॥ तस्मित्त्समुपहवमिष्ट्वासमिधो-

भ्यादधति ॥ ४ ॥ द्वादशवात्रयोदशवादक्षिणाभवन्ति ॥
॥ ५ ॥ यावानग्निर्यावत्यस्यमात्रा तावद्भवति ॥ ६ ॥
तस्मात्समानसंबंधनाः ॥ ७ ॥ तस्मादिमेप्राणाऽउपरिष्टा-
दसंछन्नाः ॥ ८ ॥ संवादेनैवर्त्त्विजोलोकाऽइति ॥९॥ ब्रह्म-
णोब्रह्मस्वयंभुब्रह्मणे नमः ॥ १० ॥ केशिनीरेवेमाआप्येत-
र्हिप्रजाजायंते ॥ ११ ॥ तस्मादिमावात्मानमभितोबाहू ॥
॥ १२ ॥ तस्माद्धैतज्जीवाश्चपितरश्चनसंदृश्यन्ते ॥ १३ ॥
वाजसनेयेनयाज्ञवल्क्योनाख्यायन्ते ॥ १४ ॥ अन्त्यपंक्ति-
कोक्ता ऋषयस्तृप्यन्ताम् ॥ इत्यन्त्यपंक्तिका ॥ ॐ अग्नि-
मीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतांररत्नधातमम् ॥
॥ १ ॥ इषेत्त्वोर्ज्जेत्वा० ॥ २ ॥ अग्नऽआयांहिवीतयेगृणा-
नोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवी०॥
॥ ४ ॥ इत्यध्ययनम् (नमस्कारः) ततः ॐ तदेतदृचाभ्युक्तं न
मृषा श्रांतं यदवंति देवाऽइतिनहैवैवंविदुषः किञ्चनमृषा श्रान्तं
भवति यथोहास्यैतत्सर्वेदेवाऽ अवन्ति ॥४॥ इति नमस्कारः॥

अथ ऋषिश्राद्धम् ॥ कृतप्राणायामो देशकालौ संकीर्त्य । ॐ उत्सर्गाङ्गभूतमृषिश्राद्धमहं करिष्ये । इति संकल्प्य ॐ इदं विष्णु इति मंत्रेण दिग्बंधः ॥ ऋषिश्राद्धस्योपहाराः शुचयो भवन्तु इत्युपहारप्रोक्षणम् । देशकालमात्रसंपदस्तु ॐ अरुंधतीसहितकश्यपादिऋषीणामिदमासनं यथायथाविभागं वा स्वाहा नमः ॥ अरुंधतीसहितकश्यपादय ऋषयः यथादत्तगंधाद्यर्चनं यथायथाविभागं वः स्वाहा नमः ॥ इति गंधादिदानम् ॥ "ऋषिश्राद्धसांगतासिद्ध्यर्थं सप्तसंख्याकान् ब्राह्मणान् यथाकालेन यथासंपन्नान्नेन तर्पयिष्ये " तेन अरुन्धतीसहितकश्यपादय ऋषयः प्रीयन्ताम् ॥ ऋषिश्राद्धसाङ्गतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणामाचार्याय तुभ्यमहं संप्रददे ॥ ततः आचार्यः । ॐ कोदादिति मंत्रं पठेत् । उपविष्टेषु ब्राह्मणषु उदकादिदानम् ॥ तद्यथा ॥ ॐ शिवा आपः संतु ॥ सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । अघोरा ऋषयः संतु । सन्त्विति प्रतिवचनम् । उत्सर्गकर्मणो न्यूनातिरिक्तदोषपरिहाराय भूयसीं दक्षिणां दद्यात् । तत उत्सर्गांगभूतमृषिश्राद्धं परिपूर्णमस्तु अस्तु परिपूर्णमिति विप्रा वदेयुः । ततः ॥ ॐ सहनोऽस्तुसहनोऽवतु सहनऽइंद्रंवीर्यवदस्तुब्रह्मइन्द्रस्तद्वेदयेन यथा न विद्विषामह इति ॐ उभाकवीषु वा यो नोधर्मः परापतत्परिसख्यस्य-

धर्मिणो ण्विसख्यानिविसृजामह इति च सर्वे जपेयुः विरताः स्मेति प्रब्रूयुः ॥ इत्यृषिश्राद्धम् ॥

अथ विसर्जनम् । ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतं ꣳ सुदानवऽइंद्रंप्राशूर्भवासचां ॥ १ ॥ स्वस्वप्रवरान् विसर्जयित्वा जले प्रवाहयेत् । ॐ समुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहां देवꣳसवितारङ्गच्छस्वाहां मित्रावरुणौगच्छस्वाहांहोरात्रेगच्छस्वाहा छंदां ꣳ सिगच्छस्वाहा द्यावांपृथिवीगच्छस्वाहां यज्ञङ्गच्छस्वाहा सोमङ्गच्छस्वाहां दिव्यन्नभौगच्छस्वाहाग्निवैश्वानरङ्गच्छस्वाहा मनोमेहार्दियच्छदिवन्तेधूमो गच्छतु स्वर्ज्योति ꣳ पृथिवीं भस्मनापृणस्वाहां ॥ २ ॥ ततो द्विराचनं कुर्युः ॥ "अनेनाध्यायोत्सर्गकर्माङ्गत्वेन कृतेन ऋषिपूजनतर्पणादिकर्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम" ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति श्रावणीप्रयोगः समाप्तः ॥

अथ रक्षाबन्धनमस्यामेव पूर्णिमायां भद्रारहितायां कार्यम्[1] ॥

---

१ अयं रक्षाबन्धो भद्रायां न कार्यः । भद्रायां न कर्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी' ॥ इति वचनादिति विश्वनाथः ॥ अत्र श्रावणीशब्देन रक्षाबन्धनमेव गृह्यते नोपाकर्मेति विदुषां परामर्श इति ध्येयम् ॥

तत्रादौ अपराह्णे सर्षपाक्षतहेमसहितां विचित्रक्षौमवस्त्रैर्वा कार्पासतन्तुभिर्ग्रथितां शुभां रक्षापोटलिकां शुद्धभाजने संस्थाप्य कुङ्कुमाक्षतैरभ्यर्च्य ब्राह्मणान्संपूज्य दक्षिणाभिः संतोष्य पूर्वमुखो ब्राह्मणद्वारा रक्षाबंधं कुर्यात् ॥ तत्र मंत्रः—"येन बद्धो बली राजा दानवेंद्रो महाबलः ॥ तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥ १ ॥" इति । "अनेन विधिना यस्तु रक्षाबन्धं समाचरेत् ॥ स सर्वदोषरहितः सुखी संवत्सरं भवेत् ॥ १ ॥" इति रक्षाविधानम् ॥

अथ गोत्रनिर्णयः ॥ तत्र चतुर्विंशतिगोत्राणि ( तथा च मनुः ) "शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा ॥ भरद्वाजो गौतमश्च सोकालीनस्तथापरः ॥ १ ॥ कल्पिषश्चाग्निवेश्यश्च कृष्णात्रेयवसिष्ठकौ ॥ विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः ॥ २ ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशरः ॥ सौपायनश्च चित्रश्च वासुकी रोहितस्तथा ॥ ३ ॥ वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः ॥ चतुर्विंशति वै गोत्राः कथिताः पूर्वपण्डितैः ॥४॥" (तत्रैव) जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ॥ वसिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥ १ ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥(धनञ्जयप्रदीपे कुलदीपिकायां च) "सौकालीनकमौद्गल्यौ पराशरबृहस्पती ॥ काञ्चनो विष्णु-

कौशिक्यौ कात्यायनात्रेयकाण्वकाः ॥ १ ॥ कृष्णात्रेयः सांकृतिश्च कौण्डिन्यो गर्गसंज्ञकः ॥ आंगिरस इति ख्यातः अनावृकाख्यसंज्ञितः ॥ २ ॥ अव्यजैमिनिवृद्धाख्याः शाण्डिल्यो वात्स्य एव च ॥ सावर्ण्यालम्पायनवैयाघ्रपद्यश्च घृतकौशिकः ॥ ३ ॥ शक्तिः काण्वायनश्चैव वासुकी गौतमस्तथा ॥ शुनकः सौपायनश्चैव मुनयो गोत्रकारिणः ॥ ॥ ४ ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥ ५ ॥ सर्वे चत्वारिंशद्गोत्राः ॥ ४० ॥ यस्य विस्मरणादिना गोत्रनाशस्तस्य काश्यपं गोत्रम् ॥ "गोत्रनाशे तु काश्यपम्" इति हेमाद्रौ व्याघ्रोक्तेः ॥ "सर्वाः प्रजाः काश्यप्य" इवि श्रुतेश्च ॥ इति गोत्रनिर्णयः ॥

अथ प्रवरनिर्णयः ॥ "प्रवरा गोत्रप्रवर्तकमुनिव्यावर्तको मुनिगणः" ॥ तथा च ॥ जमदग्निगोत्रस्य-जामदग्न्यौर्ववसिष्ठास्त्रिप्रवराः ।३॥ भरद्वाजगोत्रस्य-भरद्वाजाङ्गिरसबार्हस्पत्याः ३। विश्वामित्रगोत्रस्य-विश्वामित्रमरीचिकौशिकाः ३ । अत्रिगोत्रस्य-अत्र्यात्रेयशातातपाः ३। गौतमगोत्रस्य-गौतमवसिष्ठबार्हस्पत्याः ३। वसिष्ठगोत्रस्य-वसिष्ठशक्तिपराशराः ३ । केषाञ्चिद्वसिष्ठात्रिसांकृतयः ३ । काश्यपगोत्रस्य-काश्यपावत्सारनैध्रुवाः ३ । अगस्त्यगोत्रस्य-अगस्तिदधीचिजैमिनयः ३ । सौकालिनगोत्रस्य-सौकालिनाङ्गिरसबार्हस्पत्यावत्सारनैध्रुवाः ५ । मौद्गलगोत्रस्य-और्वच्यवन-

भार्गवजमदग्न्याप्नवन्तः ५। पराशरगोत्रस्य-पराशरशक्तिवसिष्ठाः ३। बृहस्पतिगोत्रस्य-बृहस्पतिकपिलपार्वणाः ३। कांचनगोत्रस्य-अश्वत्थदेवलदेवराजाः ३। विष्णुगोत्रस्य-विष्णुवृद्धिकौरवाः ३। कौशिकगोत्रस्य-कौशिकाऽत्रिजमदग्नयः ३। कात्यायनगोत्रस्य-अत्रिभृगुवसिष्ठाः ३। आत्रेयगोत्रस्य-आत्रेयशातातपसांख्याः ३। काण्वगोत्रस्य-काण्वाऽश्वत्थदेवलाः ३। कृष्णात्रेयगोत्रस्य-कृष्णात्रेयवासाः ३। सांकृतिगोत्रस्य-अव्याहारात्रिसांकृतयः ३। कौण्डिन्यगोत्रस्य-कौण्डिन्यस्तिमिककौत्साः ३। गर्गगोत्रस्य-गार्ग्यकौस्तुभमाण्डगार्ग्यकौस्तुभमाण्डव्याः ३। आङ्गिरसगोत्रस्य-आंगिरसवसिष्ठबार्हस्पत्याः ३। अनावृकाक्षगोत्रस्य-गार्ग्यगौतमवासिष्ठाः ३। अव्यगोत्रस्य-अव्यबलिसारस्वताः ३। जैमिनिगोत्रस्य-जैमिन्युतथ्यसांकृतयः ३। वृद्धिगोत्रस्य-कुरुवृद्धाङ्गिरोबार्हस्पत्याः ३। शाण्डिल्यगोत्रस्य-शाण्डिल्यासितदेवलाः ३। वात्स्यगोत्रसावर्ण्यगोत्रयोः-और्व्वच्यवनभार्गवजामदग्न्याप्नवन्तः ५। आलम्बायनगोत्रस्य-आलम्बायनशालङ्कायनशाकटायनाः ३। वैयाघ्रपद्यगोत्रस्य-सांकृतिः १। घृतकौशिकगोत्रस्य-कुशिककौशिकघृतकौशिकाः ३। केषाञ्चित्-कुशिककौशिकबंधुलाः ३। शक्तिगोत्रस्य-शक्तिपराशरवसिष्ठाः ३। काण्वायनगोत्रस्य-काण्वायनाङ्गिरसबार्हस्पत्यभरद्वाजाजमीढाः ५। वासुकिगोत्रस्य-अक्षोभ्यानन्तवासुकयः ३। गौतमगोत्रस्य-गौतमाप्सरोऽङ्गिरसबार्हस्पत्य-

नैध्रुवाः ५ । केषाञ्चित् गौतमाङ्गिरसवात्साः ३ । शुनकगोत्रस्य शुनकशौनकगृत्समदाः ३ । सौपायनगोत्रस्य और्वच्यवनभार्गवजामदग्न्याप्नवन्तः प्रवराः ५ । इति धनंजयकृतधर्म्मप्रदीपे गोत्रप्रवरनिर्णयः समाप्तः ॥ ( उद्वाहतत्त्वे )—"क्षत्रियवैश्यशूद्राणामतिदिष्टानतिदिष्टगोत्रप्रवरमत एवैतेषां पुरोहितगोत्रप्रवरम्" इति ॥ ( तथाचाग्निपुराणे )—"क्षत्रियवैश्यशूद्राणां गोत्रं च प्रवरादिकम् ॥ तथान्यवर्णसंकराणां येषां विप्राश्च याजकाः ॥" इति गोत्रप्रवरनिर्णयः ॥ ( सह्याद्रिखण्डे )—"क्वाहं कोऽहं कुलं किं मे संबंधः कीदृशो मम ॥ स्वस्वधर्मो न लुप्येत तर्ह्येवं चिंतयेद्बुधः ॥" ( पद्मपुराणेऽपि )—"द्विजन्मानो भवेयुः स्म स्वात्मवृत्तांतवेदिनः । आत्मनो ज्ञातिवृत्तांतं यो न जानाति सत्पुमान् ॥ ज्ञातीनां समवायार्थं पृष्टः सन्मूकतां भजेत् । स्वजातिपूर्वजानां यो न विजानाति संभवम् ॥ स भवेत्पुंश्चलीपुत्रसदृशः पितृवेदकः । गोत्रप्रवरशाखादिगोत्रदैवतसंग्रहम् ॥ स्थापनास्थानतादात्म्यं स्थापकस्यादिलक्षणम् । आत्मनः सर्ववृत्तांतं विज्ञेयमिदमादरात् ॥ गोत्रशाखावटंकं च ज्ञातिप्रवरशर्मकम् । देवीं गणपतिं यक्षं नवजातिस्तु वाडवः ॥" इति ॥

अथादिगौडब्राह्मणानामुत्पत्तिः ॥ ( १ ) ( ब्राह्मणोत्पत्तिनिबन्धे )-जनमेजयनामा वै राजा धर्मपरायणः ॥ नीतिमान् सत्यसंधश्च वेदशास्त्रविचक्षणः ॥ १ ॥ आर्यावर्ते च निवसन् पालयन् धर्मतः प्रजाः ॥ वटेश्वरं मुनिवरं शिष्यवृन्दैः समन्वितम् ॥२॥ यज्ञं कर्तुं समाहूय वेदाब्ध्यब्धीन्दु- १४४४ संमितैः ॥ ततः परमसन्तुष्टो राजा यज्ञं चकार ह ॥ ३ ॥ देवर्षींस्तोषयामास पूजास्तुत्यभिवादनैः ॥ चक्रे दानान्यनेकानि तोषयामास भूसुरान् ॥ ४ ॥ चकारावभृथस्नानं गुरुं नत्वातिभक्तितः ॥ महापूजां चकारादौ दक्षिणां दातुमुद्यतः ॥ ५ ॥ तदा स ऋषिराण्नैव प्रतिग्रहमथाकरोत् ॥ आज्ञां गृहीत्वा नृपतेः स्वदेशगमनं प्रति ॥ ६ ॥ निर्गतांश्च तदा राजा चैकैकं ग्राममुत्तमम् ॥ लिखित्वा वीटिकामध्ये स्थापयित्वा च पत्रकम् ॥ ७ ॥ एकैकं प्रददौ भक्त्या मुनिशिष्येभ्य एव च ॥ ते तु तांबूलकं मत्वा गृहीत्वा प्रेमपूर्वकम् ॥ ८ ॥ नदीतटं समायाता गम्भीरजलपूरितम् ॥ जलमध्ये यदा पादौ संस्थाप्य गमनं प्रति ॥ ९ ॥ मतिं चक्रुस्तदा पादौ मग्नौ तस्या जले ततः ॥ पूर्वं जलप्रतरणं कृत्वा पादेन चागताः ॥१०॥ कथं तद्विपरीतं च जातमत्राधुना मिथः ॥ कृत्वा विचारं चोद्घाट्य पश्चात्तांबूलवीटिकाम ॥ ११ ॥ ग्रामदानपत्रिकां वै दृष्ट्वा-

तिविस्मयान्विताः ॥ दानप्रतिग्रहान्नष्टा गतिरस्माकमेव
च ॥ १२॥ एवं निश्चित्य नृपतिं गत्वा प्रोचुर्द्विजातयः ॥
केथं वै गुप्तमार्गेण दानं दत्तं त्वयाधुना ॥ १३ ॥ तदा
प्रोवाच नृपतिः साष्टांगं प्रणिपत्य च ॥ विना वै दक्षि-
णादानं यज्ञः सांगः कथं भवेत् ॥ १४ ॥ क्षमध्वं चापराधं
मे कृपां कृत्वा ममोपरि ॥ एवमुक्त्वा स्वदेशे वै वासया-
मास तान्द्विजान् ॥ १५ ॥ ते गौडब्राह्मणाः सर्वे गौडदे-
शनिवासिनः ॥ वेदशास्त्रपुराणज्ञाः श्रौतस्मार्तपरायणाः
॥१६॥ आचारेण विहीनाश्च स्पर्शदोषविवर्जिताः ॥ शाखा
माध्यंदिनी तेषां वेदः शुक्लयजुः स्मृतः ॥ १७ ॥ गोत्राणि
गौतमादीनि सूत्रं कात्यायनीयकम् । ( कालिकापुराणे )
“वंगदेशं समारभ्य भुवनेशान्तः सुंदरि ॥ गौडदेशः समा-
ख्यातः सर्वशास्त्रविशारदैः ॥” इति गौडवंशवर्णनं समाप्तम् ॥



# अथ आदिगौडब्राह्मणोत्पत्तिर्लिख्यते ( २ )

शृणु तात प्रवक्ष्यामि ब्राह्मणोत्पत्तिनिर्णयम् । सारं च ब्रह्मज्ञातीनामादिगौडा यथाऽभवन् ॥ १ ॥ वर्त्तते सत्प्रपंचादौ ब्रह्मैकं नित्यमद्वयम् । यदेच्छति तदाद्वैतं मायामाश्रित्य लीलया ॥ २ ॥ द्विधा विभज्य स्वात्मानं पंचभूतैश्च पूर्ववत् । पिंडं निर्माय सृष्ट्यादौ विष्णुर्भूत्वा पितामहः ॥ ३ ॥ तपस्तप्त्वा चतुर्वेदान् देवान् वर्णाश्रमान्क्रमात् । पूर्वकर्मानुसारेण विश्वं सृजत्यनेकधा ॥ ४ ॥ मुखतो ब्राह्मणं सृष्ट्वा धर्माज्ञां चाददत्ततः ॥ ब्राह्मणोऽस्य मुखं चासील्लोकधर्म्मस्य गुप्तये ॥ ५ ॥ आदौ ये ब्राह्मणा जाता ब्रह्मक्षेत्रे तपोधनाः । सर्वे वेदधरा लोके सदाचारप्रवर्तकाः ॥ ६ ॥ आदिगौडाश्च ते ज्ञेया ब्रह्मक्षेत्रनिवासिनः । तेभ्यो विनिर्गता भूम्यां प्रसिद्धा दश ब्राह्मणाः ॥ ७ ॥ सारस्वताः कान्यकुब्जा गौडाश्चोत्कलमैथिलाः । पंचगौडाः समाख्याता विंध्योत्तरनिवासिनः ॥ ८ ॥ कर्णाटकाश्च तैलंगा द्राविडा गुर्जरास्तथा । महाराष्ट्राश्च पंचैते विंध्यदक्षिणवासिनः ॥ ९ ॥ तेभ्यो विनिर्गता भूम्यां चतुराशीतिज्ञातयः । अन्येऽपि बहवः सन्ति प्रकीर्णाश्चोपब्राह्मणाः ॥ १० ॥ गौडद्राविडभिन्नास्ते मिश्रिताः सर्वज्ञातयः । वसंति दैवयोगेन ब्राह्मणा यत्रतत्र वै ॥ ११ ॥ परस्परं च ते विप्रा ह्यभवन् भिन्नपंक्तयः । स्नानपानसदाचारात्सम्बन्धोऽप्यभवत्पृथक् ॥ १२ ॥ आदिगौडसमीपस्थाः पंचगौडाद्विनिर्गताः । पंचद्राविडसंभूताः कथयामि यथाक्रमात् ॥ १३ ॥ चतुर्दशशता ग्रामाश्चत्वारिंशच्चतुर्युताः । गौडानां तेषु वासाद्धि तावताः सासनाः स्मृताः ॥ १४ ॥ जीवान्धर्म्मं च विद्याश्च विप्रा रक्षन्ति सर्वदा । "गुडरक्षण" इत्यस्माद्धातोर्गौडा भवन्ति ते ॥ १५ ॥ गौडा विंशविधा ज्ञेया आदिगौडाश्च निर्गताः । हीना हीनतराः केचिद्धीनकर्म्मनियोगिनः ॥ १६ ॥ वासिष्ठा मालवीगौडाः सनाढ्या वेदत्यागिनः । गंगातटस्था गौडाश्च हर्याणा गौडसौरभाः ॥ १७ ॥ माथुराश्चैव श्रीगौडास्तथा सूर्यध्वजाह्वयाः । चौराशीयेतिनामाया दालभ्याः सुखसेनकाः ॥ १८ ॥ भट्टनागरगौडाश्च वाल्मीका गौडगुर्जराः । कौशिकाश्च महागौडा दशगौडा घरा-

करा: ॥ १९ ॥ हीनाः सप्तदशाः पूर्वा अपरा हीनतराश्रयाः ॥ विद्याकर्मविहीनास्तु विप्राः शूद्रसमाः स्मृताः ॥२०॥ विप्रारायकवासाश्च गोमित्रा दायमास्तथा। खण्डेलग्रामवासाश्च भार्गवाश्च मरुस्थलाः ॥ २१ ॥ पराशराश्च पारीखा गिरनारा भुजक्कडाः। औड्यः पुष्करनाश्चैव गौतमाः सौतिब्राह्मणाः ॥ २२ ॥ पल्लिस्थाः शंखवासाश्च धन्वाः पांचालवासिनः। सारस्वताभिधाश्चैते हीना हीनतराः परे ॥ २३ ॥ शिवब्रह्मोपपाञ्चालाः सिंधुदेशनिवासिनः। काम्बोजा महतामीरा काश्मीरा गिरिवासिनः ॥ २४ ॥ तीर्थपण्डा हवासीया ब्रात्याश्च सर्वयाचकाः। नामसारस्वताश्चान्ये बहवो मांसभक्षकाः ॥ २५ ॥ आभीराः पीलवासाश्च लेटवासाः सुनोडियाः। पाराशराश्च सरवर्यास्तथा सोमपुरोद्भवाः ॥ २६ ॥ सूर्यपाराः कनोजाश्च द्विपाठाश्च त्रिपाठकाः। कान्यकुब्जाभिधाश्चैते हीना मांसाशिनोऽपरे ॥ २७ ॥ मित्रमोडाश्च कापिल्लास्तलाजग्रामवासिनः। खेडुवा नारदीयाश्च चन्द्रसारा वलादराः ॥२८॥ गयास्था वंगगौडाश्च गौडिया याचकास्तथा। घाटिया भाटियाश्चैते मध्यस्था मांसभक्षकाः ॥ २९ ॥ कांबोदसिद्धा नादोर्या भारतीयाश्च पुष्कराः। भार्गवा गारुडीयाश्च नंदवान्नर्मदीयकाः॥ ३० ॥ द्वित्रिपाठाश्चतुष्पाठा भट्टाख्यास्तीर्थयाचकाः॥ हीना हीनतराश्चान्ये मलिना मांसभक्षकाः ॥ ३१ ॥ मैथिला ब्राह्मणाश्चैते त्रिविधाः कर्मभेदतः। उत्तमा मध्यमाश्चैवाधमाश्च कथिताः परे ॥३२॥ पण्डाः पांड्याश्च जावालास्तथा मैत्रायणीयकाः॥ माध्यंदिनास्तथाऽभिल्ला गोटवल्काः प्रभासजाः ॥ ३३ ॥ वादराश्चैव शोल्काश्च सैन्या वैभाण्डका द्विजाः॥ क्रमुका देवलाश्चैव कौशला लेखकास्तथा ॥ ३४ ॥ कापौण्ड्राः श्रेणपानर्वा नैगमा वडिकाः खराः। आवन्त्याः कांचिगाश्चैव गोमांताः सिंधुतीरजाः॥ ३५ ॥ वैष्णवाश्च जगन्नाथा ब्रह्मस्थाः सर्वभक्षकाः । उत्कला कथिताश्चैते हीना हीनतराः परे ॥३६॥ घोरकर्मरताः पापा निर्दयाश्छद्मकारिणः। नानाभेदगता विप्रा नाममात्रा उदंभराः॥ ३७ ॥ ज्ञातयः पंचगौडानां कथिता देशभेदतः। ब्राह्मणाश्चोपविप्रास्ते हीना हीनतराऽभवन् ॥ ३८ ॥ प्रसिद्धास्तेषु सर्वेषु चतुराशीतिब्राह्मणाः। हीना हीनतराश्चान्ये ह्यधमाश्चोपब्राह्मणाः॥ ३९ ॥

नानाभेदगतान् विप्रान् वक्ष्येऽहं पंचद्राविडान् । कर्णाटकाश्च तैलंगाः षड्विधाश्च नियोगिनः ॥४०॥ द्राविडा ब्राह्मणाश्चैव दशधा पंचधा स्मृताः । मेडता महता औजा ओरपालाश्च तैलियाः ॥४१॥ मोरता लाशिराः पौरा मौक्तिका द्विविधाः स्मृताः । विप्राः कर्णाटकाश्चैते हीना हीनतराः परे ॥ ४२ ॥ औदंबराश्च कापित्थास्तापिनी-तीरवासिनः । सृगालवाटकाश्चैव वटमूलाश्च ह्यौरगाः ॥ ४३ ॥ गोकुलस्थाश्च गोस्वामाः संप्रदायविभेदकाः । सन्न्यासाश्च पुनर्जाताः शिखासूत्रस्य धारिणः ॥ ॥ ४४ ॥ नियोगकारिणः सर्वे कृष्णगोपालतन्मयाः । तैलंगा द्वादशाश्चैते हीना हीनतराः परे ॥ ४५ ॥ चित्पावनाश्च हर्षाणाः कराष्ट्राः कोंकणस्थलाः । सौराष्ट्राश्च त्रिहोत्राश्च दशगोत्रास्तथापरे ॥ ४६ ॥ द्वात्रिंशग्रामवासाश्च हातित्यग्रामवासिनः । मैथुनहराश्च गोराष्ट्रविलजीपुरवासिनः ॥ ४७ ॥ यम्वरा वेरलास्तौला दशपंचविधा द्विजाः । द्राविडाः कथिताश्चैते हीना हीनतमाः परे ॥४८॥ हैवाः कंदावराः कोटाः शिवल्लिवैम्बुरास्तथा । दर्शनस्थाश्च दिक्पाला मेवाडास्त्रिविधाः स्मृताः ॥ ४९ ॥ भट्टहारास्त्रिपाठीयाश्चतुराशीतिकास्तथा । नागराः षड्विधाः प्रोक्ताश्चमत्कारपुरोद्भवाः ॥५०॥ वृद्धग्रामाश्च विंशत्याः साटोदराश्च भारडाः । चित्रोडाश्चैत्र प्रश्नोरा महाराष्ट्रांतरा द्विजाः ॥५१॥ प्रोक्ताः पंचदशाश्चैते महाराष्ट्राश्च ब्राह्मणाः ॥ हीना हीनतराश्चान्ये व्रात्या हीनतमाः परे ॥५२॥ गुर्जराः सहस्रौदीच्याष्टोलकौदीच्यब्राह्मणाः । श्रीमालिगुर्जराश्चैव औदीच्यास्त्रिविधाः स्मृताः ॥५३॥ ईराला खेडवासाश्च मुद्गलाश्च खडायताः । कलादाखागडा विप्रा सैंधवा वायडास्तथा ॥५४॥ जांबुवासाश्च कंडोला गुर्जरा अन्तर्वेदिनः । द्विवेदीयास्त्रिवेदीयाश्चतुर्वेदीयब्राह्मणाः ॥ ५५ ॥ मल्लमोडाश्च ह्योडाख्याः पार्षाणा ह्योड-गुर्जराः । धेनुह्योडाश्च विख्याता भट्टाला माधुरास्तथा ॥५६॥ ऊणवासाश्च गिनौरा गुग्गुलीया जटाधराः ॥ व्यासभट्टाश्च श्रीगौडा जीर्णनूतनभेदतः ॥ ५७ ॥ त्रिंशधा गुर्जराश्चैते कथिताः कर्मभेदतः । हीना हीनतराश्चान्ये व्रात्या हीनतरा द्विजाः ॥ ॥ ५८ ॥ प्रसिद्धास्तेषु सर्वेषु चतुराशीतिज्ञातयः । हीनकर्मरता मूढा अपराश्चोपब्राह्मणाः ॥ ५९ ॥ वर्णिता देशभेदेन ब्राह्मणाः पंचद्राविडाः । तथोपब्राह्-

नाश्चोक्ता न पारं प्राप्नुयान्नरः ॥ ६० ॥ यत्संख्या सर्वविप्राणां ज्ञातीनां वर्णनं भवेत्। सपादलक्षमेकं तत् ग्रंथो विस्तरतां नयेत् ॥ ६१ ॥ अतः संक्षेपतः प्रोक्तं ब्राह्मणोत्पत्तिनिर्णयम्। सारसारांशमादाय द्विजानां ज्ञानहेतवे ॥ ६२ ॥ सर्वे गोत्रपदाः सन्ति सर्वब्राह्मणज्ञातिषु। शाखाप्रवरसूत्राढ्याः प्रत्येकं सन्त्यनेकधा ॥ ॥ ६३ ॥ आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्। हिमवद्विंध्ययोर्मध्यमार्यावर्त्तं प्रकथ्यते ॥ ६४ ॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम्। तं देवरचितं देशं ब्रह्मदेशं प्रचक्षते ॥ ६५ ॥ ब्रह्मक्षेत्रं गुडारण्यं मत्स्यपांचालमाथुराः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तसमं वरम् ॥ ६६ ॥ ब्रह्मक्षेत्र कुरुक्षेत्र ब्रह्मदेशः प्रकथ्यते। आदिगौडर्षिदेशन्तं हर्यारण्यमिहोच्यते ॥ ६७ ॥ यत्र गौडाश्च जीवानां रक्षां कुर्वंति सर्वदा। गुडारण्यं द्विजारण्यं गौडदेशस्ततोऽभवत् ॥ ६८ ॥ ब्रह्मर्षिदेशजातानां सकाशादग्रजन्मनाम्। शिक्षेरन्मानवा भूम्यां सदाचारान् स्वकान्स्वकान् ॥ ६९ ॥ तस्मिन् देशे य आचारः पारंपर्यक्रमागतः। वर्णानां सांतरालानां सदाचारः स उच्यते ॥ ७० ॥

इति श्रीपरमेश्वराचार्यविरचिते ब्राह्मणोत्पत्तिनिबंधे गौडब्राह्मणोत्पत्तिनिर्णयाध्यायः समाप्तः।

'गोतोली' नगरस्थायी शिवनारायणः सुधीः। अमीलालसुधीसूनू रज्जीदेव्यास्तु गर्भजः ॥ १ ॥ व्योमखण्डाङ्कभूम्यब्दे (१९९०) विक्रमादित्यनामके। मासे भाद्रपदे शुक्ले सप्तम्यां रविवासरे ॥ २ ॥ कृतवांष्टिप्पटीं पूर्णां नाम्ना सारप्रदर्शिनीम्। देवद्विजप्रसादेन तया तुष्यतु शङ्करः ॥ ३ ॥ इति श्री जींदराज्यान्तर्गत 'गोतोली' ग्रामवासि-पं. श्रीमामचन्द्रशर्मणां पौत्रेण श्री पं. अमीलालशर्मणां सूनुना नोहर बीकानेर ब्राह्मणपाठशालायां प्रधानाध्यापकेन विद्यावारिधि-शाब्दिक चूडामणि पं. श्री शिवनारायणशास्त्रिणादिगौडेन निर्मिता टिप्पणी समाप्तिमफाणीदिति शम्॥

अथ ग्रंथालंकारः ॥ बभूव पूर्वं मरुधन्वदेशे बिकोजिनामा नृपतिर्महात्मा॥तस्यैव नाम्ना खलु राजधानी लोके बिकानेर इति प्रसिद्धा ॥ १ ॥ तदन्तरे लेखपुरोपमे पुरे श्रीरत्नदुर्गे सुजनैः सुसेविते ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयो बुधजीवराजः ॥ २ ॥ विवृद्धमानो विदुषां समाजे विज्ञैर्नरैः सर्वसमृद्धिभोक्ता ॥ तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदवेदांगचणाः सुशीलाः ॥ ३ ॥ आयातयातद्विजशुद्धचत्वरा वीर्येण सन्ताडितवैरिदुर्जनाः॥ एतेषु मध्ये गुरुरामकृष्णो ज्ञानेन स्वल्पीकृतसर्वतृष्णः ॥ ४ ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेवकृष्णः ॥ तस्याऽभवन्नाम ३ मिताः सुपुत्राः स्वधर्मयायिस्वकलत्रमित्राः ॥ ५ ॥ गृहेषु संलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ इमानि नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधो हि ज्येष्ठः ॥ ६ ॥ कस्तूरिचन्द्राभिधसज्जनोऽपरोऽपरो गुणैर्मण्डितज्येष्ठरामः ॥ तत्र स्थिता मध्यमपक्तिपादे कस्तूरिचन्द्राख्यमहत्सुशीलाः ॥ ७ ॥ तेषां सुपुत्रावनवद्यवंद्यावियान्वितौ द्वौ नितरामभूताम् ॥ चतुर्थिलालाख्यगुरूमुखाख्यौ सुज्ञौ गुणैर्नार्दिततदुष्टदर्पौ ॥ ८ ॥ ज्येष्ठस्तथायं खलु पण्डिताग्रणीः षट्शास्त्रवेत्ता द्विजकर्मतत्परः ॥ परोपकारी द्विजदेवभक्तो हुतावशिष्टा-

न्नसदानुरक्तः ॥९॥ एतादृशो गौडकुले बभूव चतुर्थिलालो निजधर्मपालः ॥ श्रीसाम्बपादाब्जविलग्नचित्तः शिष्टानुयायी च निबन्धकर्ता ॥ १० ॥ धर्मशास्त्रेषु निष्णातः कर्मकाण्डस्य मर्मवित् ॥ ज्योतिर्वेत्ता भिषक्श्रेष्ठो नानागौडनिबंधकृत् ॥ ११ ॥ तेनेयं रचिता माला द्विजानां नित्यकर्मणाम् ॥ अनया प्रीयतां शंभुर्भवान्या सह सर्वदा ॥ १२ ॥ 'रसवेदांङ्कसो'मेऽब्दे विक्रमादित्यसंज्ञके ॥ वैशाखशुक्लपंचम्यां पूर्णा मालाऽभवच्छुभा ॥ १३ ॥

इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना श्रीवसिष्ठगोत्रोद्भवेन पंडितश्रीरामकृष्णामरचंद्रशर्मणा पौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तवाजसनेयिना गौडवंशावतंसद्वादशमहानिबंधकर्त्रा
पं० श्रीचतुर्थीलाल ( चौथमल ) शर्मणा
विरचिता नित्यकर्मप्रयोगमाला
समाप्ता ॥ शुभमस्तु ॥

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५,
फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष/फैक्स- ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-४२००७८.

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५,
फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष/फैक्स- ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-४२००७८.

KHEMRAJ SHRIKRISHNADASS